विश्वम्भरा भगवती भवतीमसूत
राजा प्रजापतिसमो जनकः पिता ते ।
तेषां वधूस्त्वमसि नन्दिनि पार्थिवानां
येषां कुलेषु सविता च गुरुर्वयं च ॥ ९ ॥

तत्किमन्यदाशास्महे । केवलं वीरप्रसवा भूयाः ।

रामः—अनुगृहीताः स्मः ।

लौकिकानां हि साधूनामर्थं वागनुवर्तते ।
ऋषीणां पुनराद्यानां वाचमर्थोऽनुधावति ॥ १० ॥

अष्टावक्रः—इदं च भगवत्यारुन्धत्या देवीभिः शान्तया च भूयो भूयः सन्दिष्टम् । यः कश्चिद्गर्भदोहदो भवत्यस्याः सोऽवश्यमचिरात्सम्पादयितव्य इति ।

रामः—क्रियते यदेषा कथयति ।

अष्टावक्रः—ननान्दुः पत्या च देव्याः सन्दिष्टमृष्यशृङ्गेण—वत्से कठोरगर्भेति नानीतासि । वत्सोऽपि रामभद्रस्त्वद्विनोदार्थमेव स्थापितः । तत्पुत्रपूर्णोत्सङ्गामायुष्मतीं द्रक्ष्याम इति ।

रामः—( सहर्षलज्जास्मितम् । ) तथास्तु । भगवता वसिष्ठेन न किंचिदादिष्टोऽस्मि ।

अष्टावक्रः—श्रूयताम् ।

---

जामातृसत्त्रेति कथनं युक्तम् । 'चतुर्थ्यां षष्ठीति' षष्ठीनिर्देशः । 'सोमपीथी तु सोमपः' इत्यमरः । भगवान् माहात्म्यवान् । 'कीर्तिमाहात्म्ययोर्भगः' इति पदार्थमाला । आर्या च शान्तेति ध्वनिः । अस्मानपि स्मरति । अथ किं अङ्गीकारे । आह स्मेति शेषः ॥ विश्वम्भरा भगवतीति ॥ ९ ॥ वधूः स्नुषा, सविता सूर्यः । गुरुः आदिकारणम् । वयं च गुरव इत्यूह्यम् । पुरोहिता इत्यर्थः । 'गुरुर्गीष्पतिपित्रादौ' इत्यमरः । कुलेषु वयमिति च पूजायां बहुत्वम् । भगवती प्रजापतिरिति च ध्वनिः ॥ 'ध्रुवार्थे केवलं त्रिषु' इति नाममाला ॥९॥ वीरस्य पुत्रस्य प्रसवः प्रसूतिः यस्याः । 'वीरः पुत्रः' इति वेदनिघण्टुः ॥ लौकिकानां हि इति ॥ १० ॥ लौकिकानां अवैदिकानाम् । वाक्, आशीरूपा । आद्यानां मुख्यानाम् । 'ऋषयः सत्यवचसः' इति, 'आद्यः प्रथममुख्ययोः' इत्यमरसारस्वतौ ॥ अनुवर्तते प्रतीक्षत इति माठरः ॥१०॥ इदं

---

१ 'गृहेषु' इति व. २ 'अनुवर्तते' इति न. ३ 'गर्भदोहदोदयो' इति न. ४ 'वदेषा' इति क–घ.

जामातृयज्ञेन वयं निरुद्धास्त्वं बाल एवासि नवं च राज्यम्।
युक्तः प्रजानामनुरञ्जने स्यास्तस्माद्यशो यत्परमं धनं वः ॥११॥

रामः—यथा समादिशति भगवान्मैत्रावरुणिः[1]।

स्नेहं दयां च सौख्यं च यदि वा जानकीमपि।
आराधनाय लोकानां[2] मुञ्चतो नास्ति मे व्यथा ॥ १२ ॥

सीता—अदो ज्जेव्व राहवकुलधुरंधरो अज्जउत्तो। अत एव राघवकुलधुरंधर आर्यपुत्र।

रामः—कः कोऽत्र भोः। विश्राम्यतामष्टावक्रः।

अष्टावक्रः—( उत्थाय परिक्रम्य च।) अये कुमारलक्ष्मणः प्राप्तः। ( इति निष्क्रान्तः )

प्रविश्य। लक्ष्मणः—जयति जयत्यार्यः। आर्य तेन चित्रकरिणास्मदुपदिष्टमार्यस्य चरितमस्यां वीथिकायाम[3]भिलिखितम्। तत्पश्यत्वार्यः।

---

वक्ष्यमाणम्। देवीभिः कौसल्यादिभिरित्यर्थः। भूयोभूयः पुनः पुनः। 'पुनर्भृशार्थयोर्भूय' इति संसारावर्तः 'भूयोभूयो नमाम्यहम्' इति प्राञ्च। 'दौहृदं दोहदेऽपि स्यादिच्छायां गर्भकौतुके' इति विक्रमार्कः। यदि चेदित्यर्थः। ननान्दुः रामभगिन्यास्त्वाच्छान्तायाः। पत्या भर्त्रा॥ 'ननान्दा तु स्वसा पत्युः' इत्यमरः। ननान्दुरिति यथोक्तं तथेत्यर्थः ॥ जामातृयज्ञेन वयमिति ॥ ११ ॥ यज्ञेनेति तृतीया। वयमिति मातरोऽहमरुन्धती च सर्वे वयमित्यर्थः। बालः कुमारः युवैवेत्यर्थः। अत एव 'कौमारहर शचीदेव्याः' इति नीलकण्ठः। 'बाल: कुमारे च' इति शब्दमञ्जरी। युवा त्वमेवासि इति च पाठः। यत् यस्मात्कारणात्। वः रघूणां युष्माकम्। स्वस्मात् आत्मनोऽपि। यशः प्रजानुरञ्जनरूपम्। परमं शाश्वतम्। धनं तद्युक्तः स्याः इत्यर्थः। तथा च—'यौवनं धनसंपत्तिः प्रभुत्वम्' इति विषयत्रयं त्वयि जागर्ति। तस्मादविवेकता मास्तु, सावधानेन यथा सचरस्तेनि भावः ॥११॥ 'वसिष्ठे च मैत्रावरुणि' इति हारावली। अगस्त्य इति पूर्वोत्तरसन्दर्भमूढः कोऽपि बभ्राम ॥ स्नेहं दयां चेति ॥ १२ ॥ यदि वा अथवा 'आहो उताहो यदि वा' इति रत्नमाला। जानकीमपीत्यादीनि वचनानि रामस्य भाव्यर्थसूचकानीति तत्र तत्र सूक्ष्मबुद्धिभिरवगन्तव्यम् ॥१२॥ अत एव राघवकुलधुरन्धरः। राहवेत्यत्र 'अनादिनामसंयुक्तानां ख-घ-थ-ध-फ भां हः' इति हत्वम्। 'श्रेष्ठौ धुर्यौ धुरन्धरौ' इति मेदिनी। 'आलेख्यं वीथिका

---

१ 'यथाह भगवान्' इति व-घ  २ 'लोकस्य' इति न-व-घ.  ३ 'वीथ्याम्' इति क-न.

रामः—जानामि वत्स दुर्मनायमानां देवीं विनोदयितुम्। तत्कियन्तमवधिं यावत्।

लक्ष्मणः—यावदार्याया हुताशने विशुद्धिः।

रामः—शान्तं पापम्। (सासान्त्वचनम्)

उत्पत्तिपरिपूतायाः किमस्याः पावनान्तरैः।
तीर्थोदकं च वह्निश्च नान्यतः शुद्धिमर्हतः॥ १३॥

देवि देवयजनसम्भवे प्रसीद। एष ते जीवितावधिः प्रवादः।

कष्टो जनः कुलधनैरनुरञ्जनीय-
स्तन्नो यदुक्तमशिवं न हि तत्क्षमं ते।
नैसर्गिकी सुरभिणः कुसुमस्य सिद्धा
मूर्ध्नि स्थितिर्न चरणैरवताडनानि॥ १४॥

सीता—होदु अज्जउत्त होदु। एहि। पेक्खह्म दाव दे चरिदम्। भवत्वार्यपुत्र भवतु। एहि। प्रेक्षामहे तावत्ते चरितम्। (इत्युत्थाय परिक्रामति।)

लक्ष्मणः—इदं तदालेख्यम्।

सीता—(निर्वर्ण्य।) के एदे उवरि णिरन्तरट्ठिदा उवत्थुवन्ति विअ अज्जउत्तम्। क एते उपरि निरन्तरस्थिता उपस्तुवन्तीवार्यपुत्रम्।

लक्ष्मणः—देवि, एतानि तानि सरहस्यानि जृम्भकास्त्राणि यानि भगवतः कृशाश्वात्कौशिकमृषिमुपसंक्रान्तानि तेन च ताटकावधे प्रसादीकृतान्यार्यस्य।

---

चित्रपट्टिका' इति त्रिकाण्डशेषः। अवधिः अवसानम्॥ उत्पत्तिपरिपूतायाः इति॥ १३॥ पावनान्तरैः पवित्रतापादकवस्तुभेदैः॥१३॥ देवाना यजनं यत्र। यज्ञभूमिरित्यर्थः। जीवितं अवधौ अवसाने यस्य यावज्जीवमित्यर्थः॥ कष्टो जन इति॥ १४॥ 'स्यात्कष्टं कृच्छ्रमाभीलं विशेष्या भेद्यगामि यत्' इत्यमरः। कुलधनैः कुलीनैः। नः अस्माकम्। यत् अशिवं नेष्टम्, उक्तं हुताशनशुद्धिरिति भाषितम्। तत् ते तव न क्षमं न योग्यम्। तुशब्दः पादपूरणे॥ अत्र दृष्टान्तमाह—नैसर्गिकी स्वभावसिद्धा॥१४॥ आर्यपुत्र पश्यामस्ते चरितम्। चरिदं इत्यत्र 'तो द.' इति दत्वम्। निर्वर्ण्य दृष्ट्वा। क इदानीमेते उपरि निरन्तरस्थिता उपस्तुवन्तीवार्यपुत्रम्। ट्ठिदा इत्यत्र 'स्थस ठ' इति ठत्वम्। थु(त्थु)वन्तीत्यत्र 'स्तस्य थ' इति थत्वं च।

---

१ 'कियानवधिः' इति ग. २ पापम् (सासान्त्ववचनम्)' इत्येतन्नास्ति घ-पुस्तके, 'शान्तं शान्तम्' इति घ ३ कष्ट' इति क, '[illegible]' इति न. ४ 'तन्नो' इति ख, 'तन्नो दुरन्त' इति घ. ५ 'अशुभं च' [illegible] इति न. ६ 'कामन' इति ख-घ. ७ 'कृशाश्वात्' इति ग. ८ [illegible]

रामः—वन्दस्व देवि दिव्यास्त्राणि ।

ब्रह्मादयो ब्रह्महिताय तप्त्वा परःसहस्राः शरदस्तपांसि ।
एतान्यपश्यन्गुरवः पुराणाः स्वान्येव तेजांसि तपोमयानि ॥१५॥

सीता—णमो एदाणं । नम एतेभ्य ।

रामः—सर्वथेदानीं त्वत्प्रसूतिमुपस्थास्यन्ति ।

सीता—अणुग्गहिदह्मि । अनुगृहीतास्मि ।

लक्ष्मणः—एष मिथिलावृत्तान्त. ।

सीता—अम्महे दलन्तणवणीलुप्पलसामलसिणिद्धमसिणसोहमाणमंसलेण देहसोहग्गेण विम्हअत्थिमिदताददीसन्तसोम्मसुन्दरसिरी अणादरखण्डिदसंकरसरासणो सिहण्डमुद्धमुहमण्डलो अज्जउत्तो आलिहिदो । अहो दलन्नवनीलोत्पलश्यामलस्निग्धमसृणशोभमानमांसलेन देहसौभाग्येन विस्मयस्तिमिततातदृश्यमानसौम्यसुन्दरश्रीरनादरखण्डितशङ्करशरासन शिखण्डमुग्ध मुखमण्डल आर्यपुत्र आलिखित ।

लक्ष्मणः—आर्ये पश्य पश्य ।

सम्बन्धिनो वसिष्ठादीनेष तातस्तवार्चति ।
गौतमश्च शतानन्दो जनकानां पुरोहितः ॥ १६ ॥

---

तानि प्रसिद्धानि । रहस्यैः शरसन्धानमोक्षणोपसंहारादिमन्त्रैः सहितानि जृम्भकानामस्त्राणि । मित्रं सहायम् । उपसंक्रान्तानि प्राप्तानीति यावत् । तेन विश्वामित्रेण ॥ ब्रह्मादय इति॥१५॥ब्रह्महिताय ब्राह्मणसंरक्षणाय । स्वानि स्वकीयानि ॥१५॥ नम एतेभ्य. । त्वत्प्रसवं त्वत्पुत्रम् । अनुगृहीतास्मि । अम्हो आश्चर्यं ॥ दलितनवनीलोत्पलश्यामलस्निग्धमसृणमांसलदेहसौभाग्येन विस्मयस्तिमिततातनगरजनदृश्यमानसोमसुन्दरश्री अनायासखण्डितशङ्करशरासन शिखण्डमुग्धमण्डनः आर्यपुत्र आलिखित । 'मसृण स्निग्धं' इत्यमरोक्ते स्निग्धमसृणयोरेकार्थता, तदपि असम्याकृतविद्रुमसालभञ्जिकाप्रथमाङ्कोरूप्रणयप्ररूढप्रेमादीनामिव स्निग्धमसृणयोस्तत्तद्धातुमहिम्नाऽर्थान्तरभेदो दयया कल्पनीय । सर्वथैवमूह्यम्। मांसलं सान्द्रम् । सोमवत् श्रीः शोभा 'सोमवत्प्रियदर्शन ' इति रामायणे । अनायासेन लीलया । 'शिखण्डो बर्हचूडयो ' इत्यमरः । खण्डितेत्यत्र केचन शिवद्रोहिण पाषण्डाः परिहसन्तो दन्तान् दर्शयन्ति, तत्तुच्छम् ॥ रावणदुर्वहोऽपि शक्त्या हतो लक्ष्मण यथा भक्ताय हनूमते लघुरभवत् तथा शिवलिङ्गप्रतिष्ठातेति 'अत्र पूर्वं महादेव प्रसादमकरोत्प्रभु.' इत्यादिवचनेन शिवगीतोक्तविरजादीक्षानुग्रहेण च शिष्य-

---

१ 'सर्वथैतानि' इति क. २ 'सुडित' इति घ-च, '(थुड्डिद' इति न.

रामः—सुश्लिष्टमेतत् ।

जनकानां रघूणां च सम्बन्धः कस्य न प्रियः ।
यत्र दाता ग्रहीता च स्वयं कुशिकनन्दनः ॥ १७ ॥

सीता—एदे क्खु तक्कालकिदगोदाणमङ्गला चत्तारो भादरो विआहदिक्खिदा तुह्मे । अम्मो जाणामि तस्सिं जेव्व पदेसे तस्सिं जेव्व काले वत्तामि । एते खलु तत्कालकृतगोदानमङ्गलाश्चत्वारो भ्रातरो विवाहदीक्षिता यूयम् । अहो जानामि तस्मिन्नेव प्रदेशे तस्मिन्नेव काले वर्ते ।

रामः—एवम् ।

समयः स वर्तत इवैष यत्र मां
समनन्दयत्सुमुखि गौतमार्पितः ।
अयमागृहीतकमनीयकङ्कण-
स्तव मूर्तिमानिव महोत्सवः करः ॥ १८ ॥

लक्ष्मणः—इयमार्या । इयमप्यार्या माण्डवी । इयमपि वधूः श्रुतकीर्तिः ।

सीता—वच्छ इअं वि अवरा का । वत्स इयमप्यपरा का ।

लक्ष्मणः—( सलज्जस्मितम् । अपवार्य ) अये ऊर्मिलां पृच्छत्यार्या । भवतु । अन्यतः संचारयामि । ( प्रकाशम् ) आर्ये दृश्यतां द्रष्टव्यमेतत् । अयं च भगवान्भार्गवः ।

---

महाबालस्य रामस्य दयानिधिर्जगदीश्वर खण्डनार्हविष्णुब्रह्मादवघ्यरावणदुर्वहशरासनोऽभूदिति प्रामाणिका । अत एव 'बाल्क्रीडनमिन्दुशेखरधनुर्भङ्गावधि' इति भगवान् बोधायनः । 'श्रीमतः शितिकण्ठस्य कृत्स हि दुरतिक्रमम्' इत्युत्तररामायणे च विग्रहवद्धर्मस्य रामस्यैव वाक्यं इति दिक् । सुतरां श्लिष्टं युक्तमित्यर्थः ॥ जनकानां रघूणामिति ॥१७॥ यत्र सबन्धे । तथा च 'जनक देहि कन्यां गृहाण राम' इति वक्तुं कारयितुं च स्वयं स एष एव सर्वस्वतन्त्र इति भाव ॥१७॥ एते खलु तत्कालकृतगोदानमङ्गलाश्चत्वारोऽपि भ्रातरो विवाहदीक्षिता यूयम् । कालकृतेति ध्वनिः । अम्हो जानामि तस्मिन्नेव काले वर्ते इति । एवं बाढमित्यर्थं ॥ समयस्स वर्तत इति ॥१८॥ यत्र समये । आदराद्गृहीतश्चासौ कमनीयकङ्कण इति विवेक । अयमागृहीतेति ध्वनिः ॥ ॥ १८ ॥ आर्या सीता । माण्डवी भरतपत्नी श्रुतकीर्तिः शत्रुघ्नपत्नी । इयमपरा का । 'रहोऽन्येन सहोक्तौ स्यादपवार्यं जनान्तिकम्' इति लक्षणात् प्रकृते अन्येन सह भाषणाभावात् कवेः प्रमादः । अथापि 'समनन्दा

---

१ 'द्रष्टव्यमेतत्' न–च; 'दृष्टमेतत्' इति घ. २ '°सुगृहीत' इति घ–य. ३ 'संचरामि' इति घ.

सीता—( ससंभ्रमम् ) कंम्पिदह्मि । कम्पितास्मि ।

रामः—ऋषे नमस्ते ।

लक्ष्मणः—आर्ये पश्य पश्य । अयमसावार्येण ( इत्यर्धोक्ते )

रामः—( साधिक्षेपम् ) अयि वत्स बहुतरं द्रष्टव्यम् । अन्यतो दर्शय ।

सीता—( सस्नेहबहुमानं निर्वर्ण्य । ) सुट्ठु सोहसि अज्जउत्त एदिणा विणअमाहप्पेण । सुष्ठु शोभसे आर्यपुत्र एतेन विनयमाहात्म्येन ।

लक्ष्मणः—एते वयमयोध्यां प्राप्ताः ।

रामः—( सास्रम् ) स्मरामि हन्त स्मरामि ।

जीवत्सु तातपादेषु नवे दारपरिग्रहे ।
मातृभिश्चिन्त्यमानानां ते हि नो दिवसा गताः ॥ १९ ॥

इयमपि तदा जानकी

पतनविरलैः प्रान्तोन्मीलन्मनोहरकुन्तलै-
र्दशनमुकुलैर्मुग्धालोकं शिशुर्दधती मुखम् ।
ललितललितैर्ज्योत्स्नाप्रायैरकृत्रिमविभ्रमै-
रकृत मधुरैरम्बानां मे कुतूहलमङ्गकैः ॥ २० ॥

लक्ष्मणः—एषा मन्थरा ।

रामः—( सत्वरमन्यतो दर्शयन् । ) देवि वैदेहि

---

सद' इति दयया समाधेयम् । 'आरमगतं स्वगत' इति वा पाठ साधु । ऊर्मिला लक्ष्मणस्य पत्नी । भार्गवः जामदग्न्य । कम्पितास्मि । साधिक्षेपमिति—स्वोत्कर्षं परानुत्कर्षश्च न श्रोतव्या इति भाव. । शोभते आर्यपुत्र एतेन विनयमाहात्म्येन । 'पाल्यमानानां' इति पाठ साधु ॥ जीवत्सु तातपादेष्विति ॥ १९ ॥ नः अस्माकम् ॥ १९ ॥ पतनविरलैरिति ॥ २० ॥ मध्ये मध्ये दन्ताना पतनेन विरलैः गर्तैरामन्तैरिति भाव । मन्दः स्वल्प आलोक. द्योत. यस्मिन्मुखे । ललितललितैरिति वीप्साया द्विरुक्ति भृशं ललितैरित्यर्थ । ज्योत्स्नाप्रायैः चन्द्रिकाप्रचुरैः तद्वच्छीतलै सुखकरैश्चेति भाव । विभ्रमो विलास । अकृत चकार । मधुरैः मनोज्ञै । मुग्धा सुन्दरीति परिहासः । मूढेत्यर्थ । 'मुग्धस्मु-

---

१ 'भीदम्हि' इति घ–घ  २ 'माहप्पेण' इति क.  ३ 'नूतने दारसंग्रहे न ४ 'प्रतनु' इति घ–घ–क.  ५ 'कुड्मलै.' इति न.  ६ 'महानाम्' इति न ७ 'अनुचरमन्यतो गत्वा' इति घ–घ.

इङ्गुदीपादपः सोऽयं शृङ्गवेरपुरे पुरा।
निषादपतिना यत्र स्निग्धेनासीत्समागमः ॥ २१ ॥

लक्ष्मणः—( विहस्य। स्वगतम्। ) अये मध्यमाम्बावृत्तान्तोऽन्तरितमार्येण।

सीता—अम्मो एसो जडासंजमणवुत्तन्तो। अहो एष जटासंयमनवृत्तान्तः।

लक्ष्मणः—पुत्रसंक्रान्तलक्ष्मीकैर्यद्वृद्धेक्ष्वाकुभिर्धृतम्।
धृतं बाल्ये तदार्येण पुण्यमारण्यकव्रतम् ॥ २२ ॥

सीता—एसा पसण्णपुण्णसलिला भअवदी भाईरही। एषा प्रसन्नपुण्यसलिला भगवती भागीरथी।

रामः—देवि रघुकुलदेवते नमस्ते।

तुरगविचयव्यग्रानुर्वीभिदः सगराध्वरे
कपिलमहसामर्षात्प्लुष्टान्पितुश्च पितामहान्।
अगणिततनूतापं तप्त्वा तपांसि भगीरथो
भगवति तव स्पृष्टानद्भिश्चिरादुदतीतरत् ॥ २३ ॥

सा त्वमम्ब स्नुषायामरुन्धतीव सीतायां शिवानुध्याना भव।

---

न्दरमूर्यो' इति यादवः ॥ २० ॥ इङ्गुदीपादप इति ॥ २१ ॥ 'इङ्गुदी तापसतरुः' इत्यमरः। यत्र पादपे पादपप्रदेशे इत्यर्थः। यत्र शृङ्गिबेरपुरे इति केचित्। तन्न। सोऽयं पादप इति वाक्यविरोधात्। 'स्निग्धस्सुहृत्' इति वामनः ॥ २१ ॥ मध्यमाम्बा कैकेयी। उत्तमाम्बा नेति व्यज्यते। वृत्तं। वृत्तान्तं इति भ्रान्तः पाठः। वृत्तान्त इत्यमरः। अन्तर्हितमिति–मातृनिन्दा मा भूदिति भावः। एष जटासंयमनवृत्तान्त ॥ पुत्रसंक्रान्तेति ॥ २२ ॥ यद्वृद्धेक्ष्वाकुभिरित्यादि सन्धिसङ्कटम्। अन्तर्जलनिर्दिष्टेति प्राक्-स्वसारेति च शम्भवशातनिन्दसालभञ्जिकाभारतचम्पूप्रयोगवद्दर्शनीयम्। बाल्ये कौमारदशायाम्। आरण्यका वनवासिनः ॥ २२ ॥ एषा प्रसन्नपुण्यसलिला भगवती भागीरथी ॥ तुरगविचयव्यग्रेति ॥ २३ ॥ विचये अन्वेषणे। कपिल एव महः तेजः। तेन कर्त्रा। रोषादेतो।

---

१ 'वृत्तान्तमन्तरितम्' इति न; 'वृत्तान्तोऽन्तरितः' इति क. २ 'कृतम्' इति घ. ३ 'आरण्यकं व्रतम्' इति घ–व. ४ 'रोषात्' इति न. ५ 'पुरा प्रपितामहान्' इति घ–क; 'पितुः प्रपितामहान्' इति घ. ६ '°तनूताप°' इति न; 'तनूतापं' इति च–घ. ७ 'उदतीधरत्' इति च–घ; 'उदधीतरत्' इति क.

लक्ष्मणः—अयमसौ भरद्वाजावेदितश्चित्रकूटयायिनि वर्त्मनि वनस्पतिः कालिन्दीतटे वटः श्यामो नाम ।

रामः—( सस्पृहमवलोकयति । )[1]

सीता—सुमरदि वा एदं पदेसं अज्जउत्तो । स्मरति वैत प्रदेशमार्यपुत्र ।

रामः—अयि कथ विस्मर्यते ।

> अलसललितमुग्धान्यध्वसम्पातखेदा-
> दशिथिलपरिरम्भैर्दत्तसंवाहनानि ।
> परिमृदितमृणालीदुर्बलान्यङ्गकानि
> त्वमुरसि मम कृत्वा यत्र निद्रामवाप्ता ॥ २४ ॥

लक्ष्मणः—एष विन्ध्याटवीमुखे विराधसंरोधः ।

सीता—अलं दाव एदिणा । पेक्खामि दाव अज्जउत्तसंहत्तधरिदतालव-न्तोदवत्तनिवारिदादप अत्तणो दक्खिणारण्णप्पवेसारम्भम् । अल तावदेतेन । प्रेक्षे तावदार्यपुत्रस्वहस्तधृततालवृन्तातपत्रनिवारितातपमात्मनो दक्षिणारण्य-प्रवेशारम्भम् ।

---

प्लुष्टान् दग्धान् । पितुः भगीरथजनकस्य । प्रपितामहान् सगरपुत्रान् । उदतीतरत् उत्तारयामास ॥ २३ ॥ अरुन्धतीव स्थिता सा प्रसिद्धा लमिति ॥ अथवा—यथा अरुन्धती तथा सा लमित्यर्थ । शिवं मङ्गलं अनुध्यानं अनुचिन्तनं यस्याः । 'वानस्पत्य फलैः पुष्पात्तैरपुष्पाद्वनस्पति-' इत्यमरः ॥ स्मरति वा एनं प्रदेशमार्यपुत्र । अलसललितेति ॥ २४ ॥ यत्र प्रदेशे अध्वसम्पातखेदात् अलसानि आलस्ययुक्तानि जडानीति यावत् । स्वभावतस्तु ललितेन विलासेन मुग्धानि मनोज्ञानीत्यर्थः ॥ 'सपाते चानिपतनमतिपातोऽप्यनिक्रम ।' इति त्रिरूपः । अशिथिलपरिरम्भैः दृढालिङ्गनै । संवाहनं मर्दनम् । अन्योन्यसङ्घट्टनवशादिति भाव । परिमृदिताः क्लिष्टाश्च ता । 'मृणालं बिसु' इति विक्रमार्कः । 'पाणौ मृणालीलता' इत्यसकृदाख्यातविद्धसालभञ्जिकायाम् । तस्मादितरविस्मरणेऽपि नेदं विस्मर्यत इति भाव ॥ २४ ॥ अटवीमुखे वनपुर प्रदेशे ॥ अलमेतेन पश्यामि तावदार्यपुत्रस्वहस्तधारिततालवृन्तातप( त्र[2] )निवारितातपं आत्मन अक्षिभ्या दक्षिणारण्यपथिक्लमम् ॥ तालवृन्तेति क्वचे प्रमाद । 'ता

---

१ एतन्नास्ति ब–घ–पुस्तकयो. २ 'सञात' इति ब–घ–क ३ 'सवाद.' इति न. ४ 'अज्जउत्तहत्थ' इति ब–घ ५ 'तालवेण्टा०' इति घ, 'तालवे-ण्टादवत्त' इति ब, 'तालवुन्तादवत्त' इति न. ६ 'अत्तणो अच्चादिद दक्खिणार-ण्णपदिअत्तणम्' इति न.

रामः—एतानि तानि गिरिनिर्झरिणीतटेषु
वैखानसाश्रिततरूणि तपोवनानि ।
येष्वातिथेयपरमा यमिनो भजन्ते
नीवारमुष्टिपचना गृहिणो गृहाणि ॥ २५ ॥

लक्ष्मणः—अयमविरलानोकहनिवहनिरन्तरस्निग्धनीलपरिसरारण्यपरिणद्धगोदावरीमुखरकन्दरः सततमभिष्यन्दमानमेघमेदुरितनीलिमा जनस्थानमध्यगो गिरिः प्रस्रवणो नाम ।

रामः—स्मरसि सुतनु तस्मिन्पर्वते लक्ष्मणेन
प्रतिविहितसपर्यासुस्थयोस्तान्यहानि ।
स्मरसि सरसनीरां तत्र गोदावरीं वा
स्मरसि च तदुपान्तेष्वावयोर्वर्तनानि ॥ २६ ॥

किं च । किमपि किमपि मन्दं मन्दमासक्तियोगा-
दविरलितकपोलं जल्पतोरक्रमेण ।
अशिथिलपरिरम्भव्यापृतैकैकदोष्णो-
रविदितगतयामा रात्रिरेव व्यरंसीत् ॥ २७ ॥

लक्ष्मणः—एषा पञ्चवट्यां शूर्पणखा ।

---

स्फुन्तेऽथ' इत्यनुशासनात् 'तालओण्डे'ति कथनस्यैव न्याय्यत्वात् । 'अच्छिहिं' इति 'द्विवचने बहुवचनं' इति बहुत्वं 'अक्खिहिं' इति च प्रमादः। 'अक्ष्यादिषु छः' इति छत्वविधानात् 'अच्छिहिं' इति ज्यायान् पाठः ॥ **एतानि तानीति** ॥ २५ ॥ **निर्झरिणीनां** गिरिनदीनाम् । **येषु** तपोवनेषु ॥ 'क्मादानिष्यानियेयातिथ्यर्थेऽत्र साधुनि ।' इत्यमरः । **यमिनः** नियमवन्तः । **गृहिणः** गृहस्थाः ॥ २५ ॥ **अनोकहनिवहाः** तरुगणाः । तैः **निरन्तरं** सान्द्रं यथा तथा, **स्निग्धनीलानि** मसृणानि श्यामलानि च तानि **परिसरारण्यानि** तैः परिसरारण्यायां सान्द्रायां **गोदावर्यां मुखराः** यस्य पूर्वानुभवस्मरणात् चित्रे मुखरकन्दरत्वोपचारः इति बोध्यम् । **अभिष्यन्दमानाः** प्रस्रवन्तः ये **मेघाः** **तैर्मेदुरितः** निबिडीकृतः **नीलिमा** नैल्यं यस्य ॥ **स्मरसि सुतन्विति** ॥ २६ ॥ **लक्ष्मणेन प्रतिविहितेत्या**दिकं 'रसैर्यहीताजुनयेन' इति विश्वसमाधेयम् । **वर्तितानि** वर्तनानीत्यर्थः । द्वितीयपादादौ यमकभङ्गः । स्मरसीति त्रिः पुनरुक्तं च ॥ २६ ॥ **किमपि किमपीति** ॥ २७ ॥ **किमपि** अनिर्वाच्यं यथा तथा, **किमपि** किञ्चित् ।

---

१ 'यमिनो' इति ख-घ-क. २ 'मुखकन्दर.' इति न. ३ 'सरसतीराम्' इति ख-घ. ४ 'आसक्ति' इति ख-घ. ५ 'दृशः...दृष्टोत्सानिवादः' इति न.

सीता—हा अज्जउत्त एत्तिअं दे दंसणम्। हा आर्यपुत्र एतावत्ते दर्शनम्।

रामः—अयि विप्रयोगत्रस्ते चित्रमेतत्।

सीता—जहा तहा होदु। दुज्जणो असुहं उप्पादेइ। यथा तथा भवतु। दुर्जनोऽसुखमुत्पादयति।

रामः—हन्त वर्तमान इव मे जनस्थानवृत्तान्तः प्रतिभाति।

लक्ष्मणः—अथेदं रक्षोभिः कनकहरिणच्छद्मविधिना
तथा वृत्तं पापैर्व्यथयति यथा क्षालितमपि।
जनस्थाने शून्ये विकलकरणैरार्यचरितै-
रपि ग्रावा रोदित्यपि दलति वज्रस्य हृदयम्॥ २८॥

सीता—( सास्रमात्मगतम्। ) अयि देव रहुकुलाणन्द एव्व मम कारणादो किलन्तो[1] आसि। अयि देव रघुकुलानन्द एवं मम कारणात्क्रान्त आसी।

लक्ष्मणः—( रामं निर्वर्ण्य साकूतम्। ) आर्य किमेतत्।

---

ईषदिति यावत्। मन्दं मन्दं शनैः शनैः। आसत्तियोगात् अभिनिवेशसङ्गते। अविरलितौ मिथो नीरन्ध्रीकृतौ कपोलौ यस्मिन् कर्मणि। अक्रमेण मदनावेशपारवश्यात्पूर्वोत्तरसम्बन्धाभावेनेत्यर्थः। एकैकदोष्णोः परस्परभुजयोः। अविदिताः गतयामाः अतिक्रान्तप्रहरा यस्याः। रात्रिरेव व्यरंसीत् विरराम। न तु सल्लापैकदेशोऽपीति भावः॥ २७॥ आर्यपुत्र एतावत्ते दर्शनम्। यथा तथा वा भवतु। दुर्जन असुखमुत्पादयति॥ अथेदं रक्षोभिरिति॥ २८॥ अथानन्तरं इदमेतत्। अथेदमिति वाक्यखण्डः। वृत्तं आचरितम्। 'वृत्तमाचरितातीतपद्यचारित्रवर्तुले' इति केदारः। क्षालितं निश्शेषितमपि वृत्तमित्यनुषज्यते। शून्ये सजातीयरहिते। विकलकरणैः विवशेन्द्रियैः। आर्यस्य रामस्य चरितैः प्रदर्शितरपैरित्यर्थः। अत एव ग्रावा शैलोऽपि रोदिति प्रतिध्वनिव्याजेनेत्यूह्यम्। इतोऽपि न्यैताह—वज्रस्य कुलिशस्य। हृदयं गर्भः। दलति स्फुटति। अपिः सम्भावनायाम्। तथा च कदाचिद्बलवज्रादीनां नादव (?) स्यात्। न तु तेषां दुरात्मनामासीदिति भावः। 'हृदयं हृदि गर्भे च' इति पद्ममाला॥ 'हन्त रोदिति शैलोऽपि वज्रगर्भोऽपि दीर्यति। प्रकम्पतेऽपि विध्यण्डमण्डलं रोदनैस्तव॥' इति महानाटके मेघनादोत्पत्तौ भगवान् बोधायनः॥ २८॥ अम्हो दिनकरकुलनन्दन एतावन्मम कारणात् क्लान्त आसीत्। एतावदिति क्रियाविशेषणम्। कारणात् हेतोः। निर्वर्ण्य

---

१ 'वन्ये' ख–घ २ 'कलिदोसि' इति ख–घ क.

सीता—हा ताद णिव्वूढो दे अवच्चसिणेहो । हा तात निर्व्यूढस्तेऽपत्यस्नेह ।

राम.—हा तात काश्यप शकुन्तराज क नु खलु पुनस्त्वादृशस्य महतस्तीर्थभूतस्य साधोः सम्भवः ।

लक्ष्मणः—अयमसौ जनस्थानस्य पश्चिमतश्चित्रकुञ्जवान्नाम दनुकबन्धाधिष्ठितो दण्डकारण्यभाग. । तदिदमृष्यमूकपर्वते मतङ्गस्याश्रमपदम् । इयं च श्रमणा नाम सिद्धा शबरतापसी । तदेतत्पम्पाभिधान पद्मसरः ।

सीता—एत्थ क्खिल अज्जउत्तेण णिच्छिण्णामरिसधीरत्तणं पमुक्कण्ठं रुण्ण आसि । अत्र किलार्यपुत्रेण निच्छिन्नामर्षधीरत्व प्रमुक्तकण्ठं रुदितमासीत् ।

राम.—देवि रमणीयमेतत्सरः ।

एतस्मिन्मदकलमल्लिकाक्षपक्ष-
व्याधूतस्फुरदुरुदण्डपुण्डरीकाः ।
बाष्पाम्भःपरिपतनोद्गमान्तराले
सन्दृष्टाः कुवलयिनो भुवो विभागाः ॥ ३१ ॥

लक्ष्मण.—अयमार्यो हनूमान् ।

सीता—एसो सो चिरणिव्वूढजीवलोअपच्चुद्धरणगुरुओवआरी महाणुभावो मारुदी । एष स चिरनिर्व्यूढजीवलोकप्रत्युद्धरणगुरूपकारी महानुभावो मारुति ।

---

गत प्राणपर्यन्तमिति शेष ॥ तीर्थभूतस्य गुरुप्रायस्य । जनस्थानं पश्चिमतः जनस्थानस्य पश्चिमभागे इत्यर्थ । शबरेषु तापसी शबरीत्यर्थ ॥ अत्र किल आर्यपुत्रेण विच्छिन्नामर्षधैर्येण प्रमुक्तकण्ठं प्ररुदितमासीत् । धीरमित्यत्र 'ई धैर्ये' इति, 'तुर्यधैर्यसौन्दर्याश्चर्यपर्यन्तेषु र' इति च इत्वं रत्वं च । रमणीय इति ध्वनि ॥ एतस्मिन्मदकल इति ॥ ३१ ॥ 'मलिना मल्लिकाक्षा' इत्यमर' । तेषा पक्षै व्याधूतानि कम्पितानि । स्फुरन्ति शोभमानानि उरुदण्डानि विपुलनालानि पुण्डरीकाणि येषु ते । बाष्पाम्भसां पतनोदययोरन्तराले अवान्तरदशायामित्यर्थ । विभागाः प्रदेशा ॥ ३१ ॥ अयमार्य इति ध्वनि. ॥ एष स चिरनिर्व्यूढजीवलोकप्रत्युद्धरणगुरुकोपकारो महानुभाव गुरुरेव गुरुकः स्वार्थे क । प्रत्युद्धरण-

---

१ 'तीर्थस्य' ख–घ–क. २ 'जनस्थानपश्चिम' ख–घ. ३ 'कुञ्जवान्नाम पर्वतो' न. ४ 'तदिदमसुष्य परिसरे' न. ५ 'सिद्धशबरी' ख–घ. ६ 'मया' न. ७ 'णिव्विण्ण' क–घ–ख.

रामः—दिष्ट्या सोऽयं महाबाहुरञ्जनानन्दवर्धनः ।
यस्य वीर्येण कृतिनो वयं च भुवनानि च ॥ ३२ ॥

सीता—वच्छ एसो कुसुमिदकअम्बतरतण्डविअबरहिणो किंणामधेओ गिरि जन्थ अणुभावसोहग्गमेत्तपरिसेसधूसरसिरी मुहुत्त मुच्छन्दो तुए परुदिएण अवलम्बिदो तरुअले अज्जउत्तो आलिहिदो । वत्स एष कुसुमितकदम्बताण्डवितबर्हिण किंनामधेयो गिरिर्यत्रानुभावसौभाग्यमात्रपरिशेषधूसरश्रीर्मुहूर्तं मूर्छंस्त्वया प्ररुदितेनावलम्बिततरुतल आर्यपुत्र आलिखित ।

लक्ष्मणः—सोऽयं शैलः ककुभसुरभिर्माल्यवान्नाम यस्मि-
न्नीलः स्निग्धः श्रयति शिखरं नूतनस्तोयवाहः ।

आर्येणास्मिन्

रामः—विरम विरमातः परं न क्षमोऽस्मि
प्रत्यावृत्तः पुनरिव स मे जानकीविप्रयोगः ॥ ३३ ॥

लक्ष्मणः—अत परमार्येण तत्रभवता कपिराक्षसानां चासंख्याताः न्युत्तरोत्तराणि कर्माश्चर्याणि । परिश्रान्ता चेयमार्या । तद्विज्ञापयामि विश्राम्यतामिति ।

सीता—अज्जउत्त एदिणा चित्तदंसणेण पच्चुप्पण्णदोहलाए अत्थि मए विण्णप्पं । आर्यपुत्र एतेन चित्रदर्शनेन प्रत्युत्पन्नदोहदाया अस्ति मम विज्ञाप्यम् ।

रामः—नन्वाज्ञापय ।

---

मेव गुरुक विपुल उपकार यस्य सोऽय शोभत इति शेष ॥ दिष्ट्या सोऽयमित्यादि ॥ ३२ ॥ कृतिनः कुशला । कुशलानीति भुवनपक्षे ॥ ३२ ॥ वत्स एष कुसुमितकदम्बताण्डवितमयूर किंनामधेयो गिरि । यत्रानुभावसौभाग्यमात्रपरिशेषधूसरश्री मूर्छन् त्वया प्ररुदितेनावलम्बितस्तरुतले आर्यपुत्र आलिखित । कदम्बाः नीपवृक्षा । मोरो इति वक्तव्ये मेऊरो इति कथन कवे प्रमाद । तथापि शेषसंस्कृतादि(ति) सूत्रेण दय नीयोऽयं प्रयोग । प्रकृष्टं रुदितं यस्य ॥ सोऽयं शैल इति ॥ ३३ ॥ अतः आर्येणास्मिन् इति वाक्यात् पर अन्यत् वक्ष्यमाणम् श्रोतुमिति शेष । स. अनिर्वाच्य । प्रत्यावृत्तः आगत इवेत्यर्थ । तृतीयचरणे राम इति व्यवधाने सत्यपि नाटकादौ न दोष इत्यालङ्कारिकाणा समय । अत एव विक्रमचरिते—'देवाकर्णय' इति शुकवाक्यप्रस्तावान्तरे 'तिष्ठति पतगेति'

---

१ 'सुन्दरसिरी' न. २ एतन्नास्ति क–घ–ब–पुस्तकेषु. ३ 'वत्सैतत्सादिरम' इति क–घ–ब. ४ 'पुनरपि' ब–घ. ५ 'विन्ध्यावन्ध्य' क–न.

सीता—जाणे पुणोवि पसण्णगम्भीरासु वणराइसु विहरिस्सं पवित्तणिम्मेळसिसिरावगाहां भअवदि भाईरहिं ओगाहिस्सं त्ति । जाने पुनरपि प्रसन्नगम्भीरासु वनराजिषु विहरिष्यामि पवित्रनिर्मलशिशिरावगाहां भगवतीं भागीरथीमवगाहिष्य इति ।

रामः—वत्स लक्ष्मण ।

लक्ष्मणः—एषोऽस्मि ।

रामः—वत्स अचिरं सम्पादनीयोऽस्या दोहद इति संप्रत्येव गुरुभिः सन्दिष्टम् । तदस्खलितसुखसम्पातं रथमुपस्थापय ।

सीता—अज्जउत्त तुम्हेहिं वि आअन्दव्वं । आर्यपुत्र युष्माभिरपि आगन्तव्यम् ।

रामः—अयि कठिनहृदये एतदपि वक्तव्यमेव ।

सीता—तेण हि पिअं मे पिअं मे । तेन हि प्रियं मे प्रिय मे ।

लक्ष्मणः—यथाज्ञापयत्यार्यः । ( इति निष्क्रान्तः । )

रामः—प्रिये अत्र वातायनोपकण्ठे मुहूर्तं संविष्टौ भवावः ।

सीता—एवं होदु । ओहरिदम्हि क्खु परिस्समजणिदाए णिद्दाए । एवं भवतु । अपहृतास्मि खलु परिश्रमजनितया निद्रया ।

रामः—तेन हि निरन्तरमवलम्बस्व मामनुशयनाय ।

जीवयन्निव ससाध्वसश्रमस्वेदबिन्दुरधिकण्ठमर्प्यताम् ।
बाहुरैन्दवमयूखचुम्बितस्यन्दिचन्द्रमणिहारविभ्रमः ॥ ३४ ॥

( तथा कारयन्सानन्दम् । ) प्रिये किमेतत् ।

---

भक्तिनाभिधानादिति दिक् ॥ ३३ ॥ यमार्येति ध्वनि ॥ आर्यपुत्र एतेन प्रियदर्शनेन प्रत्युत्पन्नदोहदाया विज्ञाप्य मेऽस्ति । दोहलाए इत्यत्र 'दोहदे ल' इति लत्वम् ॥ जाने पुनरपि प्रसन्नगभीरासु वनराजिषु विहरिष्यामि । पवित्रनिर्मला शिशिरावगाहां भगवतीं भागीरथीमवगाहिष्ये इति ॥ तत् तस्मात् । सम्पातः चक्रमज्जनादिना पार्श्वादिषु कुण्ठनमित्यर्थः । उपस्थापयेति ध्वनि ॥ आर्यपुत्र युष्माभिरप्यागन्तव्यम् । तेन हि प्रियं मे प्रियं मे । एवं भवतु । अपहृतास्मि खलु निद्रया । अनुगमनायेति ध्वनि ॥ जीवयन्निवेति ॥ ३४ ॥ चन्द्रमणयः चन्द्रकान्ताः । विभ्रमः विलासः । बाहुरधिकण्ठमर्प्यताम् अन्धवदिति ध्वनि ॥ ३४ ॥ त्वय्येति—यथा सीता अपि-

---

१ 'सोम्य' क-घ-व. २ 'इतो वातायनावर्तके' घ-व. २ 'संविश भव' न. ३ 'मामत्र शयनाय' क-घ-व.

विनिश्चेतुं शक्यो न सुखमिति वा दुःखमिति वा
प्रमोहो निद्रा वा किमु विषविसर्पः किमु मदः ।
तव स्पर्शे स्पर्शे मम हि परिमूढेन्द्रियगणो
विकारश्चैतन्यं भ्रमयति च संमीलयति च ॥ ३५ ॥

सीता—थिरप्पसादा तुम्हे इदो दाणिं किं अवरम् । (स्थिरप्रसादा यूयमित इदानीं किमपरम् ।)

रामः—म्लानस्य जीवकुसुमस्य विकासनानि
सन्तर्पणानि सकलेन्द्रियमोहनानि ।
एतानि ते सुवचनानि सरोरुहाक्षि
कर्णामृतानि मनसश्च रसायनानि ॥ ३६ ॥

सीता—पिअंवद एहि । संविसम्ह । (इति शयनाय समन्ततो निरूपयति) प्रियंवद एहि । संविशावः ।

रामः—अयि किमन्वेष्टव्यम् ।

---

कण्ठं बाहुमर्पयेद् तथेत्यर्थः ॥ अथ तमेव बाहुस्पर्शं विच्छित्तिविशेषैरुद्देशति ॥ विनिश्चेतुं शक्य इति ॥ ३५ ॥ विगतश्चासौ निश्चय इति व्युत्पत्तिबलाद्विनिश्चयशब्देन निश्चयभिन्नज्ञानं विवक्ष्यते । तथा च विनिश्चेतुं ज्ञातुं न शक्य इत्यर्थः । प्रथमचरणस्य मोक्ष इति भावः । अत एव सुखदुःखवत्तु मोक्ष इति भावः । प्रमोहः मूर्च्छातिशयः । विसर्पः व्याप्तिः । मदो मत्तता । 'बालोन्मत्तपिशाचवद्' इति स्मृतेः । अनेन द्वितीयचरणेऽन्य ज्ञानाभाव इति भावः । परि परितः । मूढः स्वस्वकार्यविमुख इन्द्रियगणो यस्मिन् । चेतनस्य भावः चैतन्यं ज्ञानम् । इदं कर्म भ्रमम् । 'ज्ञानं तु चेतना ज्ञप्ती' इत्यमरः । भ्रमशाली संमोहशाली च करोतीत्यर्थः । भ्रमः भ्रान्तिः । 'आनन्दभ्रमयोस्संमोहः' इति नाममाला । उत्तरार्धे विकारो ज्ञानाभावात्मक इति भावः । एवमालोच्य अनिर्वचनीयं पारदृश्यमनुभवामीति पद्यस्य पर्यवसन्नोऽर्थः । अयमेव कवेर्भावः । एवमादिष्वन्येषु पद्येषु साहानशब्दानुना दुर्विदग्धाः परस्परं शिक्षा विभ्रतः कलहायन्ते । शिष्यमितोऽक्षाबनसूक्तनिर्णयोऽपि प्रमाणम् । इति दिक् ॥ ३५ ॥ त्वद्गो चदसीति पूजाभिप्रायेणाह—थी(स्थि ?)रेति । स्थिरप्रसादा यूयमिति किमाश्चर्यम् । अत्र चाद्रूपी । 'तूर्यधैर्यसौन्दर्यपर्यन्तेषु रः' इत्यनेन 'अचेर' इति

---

१ 'सनुन्नीरयती' इति ब. २ 'थीरप्पसादा यूयमनेदानीमाश्चर्यम्' न. ३ 'नानि सुवचनानि सरोरुहाक्षाः' ब. ४ 'सरम्म' (शयिने) इति ब-घ. ५ 'अयि सन्देष्टव्यम्' न.

आ विवाहसमयाद्गृहे वने शैशवे तदनु यौवने पुनः ।
स्वापहेतुरनुपाश्रितोऽन्यया रामबाहुरुपधानमेष ते ॥ ३७ ॥

सीता—( निद्रां नाटयन्ती । ) अत्थि एदम् । अज्जउत्त अत्थि एदं । ( इति स्वपिति । ) अस्त्येतदार्यपुत्र अस्त्येतत् ।

रामः—कथं प्रियवचना मे वक्षसि प्रसुप्तैव । ( निर्वर्ण्य )

इयं गेहे लक्ष्मीरियममृतवर्तिर्नयनयो-
रसावस्याः स्पर्शो वपुषि बहुलश्चन्दनरसः ।
अयं बाहुः कण्ठे शिशिरमसृणो मौक्तिकसरः
किमस्या न प्रेयो यदि[1] परमसह्यस्तु विरहः ॥ ३८ ॥

प्रविश्य । प्रतीहारी—देव उवट्ठिदो । देव उपस्थितः ।

रामः—अयि कः ।

प्रतीहारी—आसण्णपरिआरओ देवस्स दुम्मुहो । आसन्नपरिचारको देवस्य दुर्मुखः ।

रामः—( स्वगतम् ) शुद्धान्तचारी दुर्मुखः । स मया पौरजानपदेष्वप-सर्पः[2] प्रहितः । ( प्रकाशम् ) आगच्छतु ।

( प्रतीहारी निष्क्रान्ता । )

प्रविश्य । दुर्मुखः—( स्वगतम् ) हा कहं दाणिं देविं अन्तरेण ईदिसं अचिन्तणिज्जं जणाववादं देव्वस्स कहइस्सं । अहवा णिओओ क्खु मे एरिसो

---

वक्तव्ये 'अच्चरिअ' इति प्रमादः ॥ म्लानस्य जीवकुसुमस्येति ॥ ३६ ॥ जीवः असुधारणम् । विकासनानि विकासकराणि । इति यथोचितमूलम् । पक्षेऽस्मिन् ममेत्यध्याहारः ॥ ३६ ॥ प्रियंवद एहि सविशाद । अयिः सभावनायाम् ॥ आ विवाहसमयादेति ॥ ३७ ॥ वने दण्डकावने । अस्यान्ततोऽन्वय ॥ ३७ ॥ आर्यपुत्र एतदस्मि । निर्वर्ण्य दृष्ट्वा ॥ इयं गेहे लक्ष्मीरिति ॥ ३८ ॥ अमृतरूपा अञ्जनवर्तिरिति भावः । मसृणः स्निग्धः । अस्याः किं न प्रेयः सर्वं प्रेय इत्यर्थः । तु किन्तु । विरहो यदि विरहश्चेत् परं अत्यन्तम् । असह्यः ॥ ३८ ॥ देव उपस्थितः । विरह इति च पूर्वेणान्वय । आसन्नपरिचारको देवस्य दुर्मुखः । शुद्धान्तं अन्तःपुरम् । अपसर्पः चरस्मन् ॥ हा कथमिदानीं सीतादेवीमन्तरेणेदृशमचिन्तनीयं जनापवादं देवाय कथयिष्यामि । अथवा नियोगः खलु मे मन्दभाग्यस्यैषः । हा आर्यपुत्र क्वासि । सौजन्यं चिन्तनेति यावत् ॥ सौजन्य वर्णयति ॥

---

१ 'यदि पुनरमसो न' इति क–घ. २ 'जानपदानपसर्पितु' ख–क–घ.

[मन्दभाग्यस्य । हा कथमिदानीं देवीमन्तरेण ईदृशमचिन्तनीयं जनापवादं देवाय कथयिष्यामि । अथवा नियोगः खल्वीदृशो मे मन्दभाग्यस्य ।

सीता—( उत्स्वप्नायते ) हा अज्जउत्त सोम्म कहिं सि । हा आर्यपुत्र सौम्य कुत्रासि ।

रामः—अये सैवेय[1] रणरणकदायिनी चित्रदर्शनाद्विरहभावना देव्याः स्वप्नोद्वेगं करोति । ( सस्नेहमङ्गमस्याः परामृशन् । )

> अद्वैतं सुखदुःखयोरनुगतं[2] सर्वास्ववस्थासु य-
> द्विश्रामो हृदयस्य यत्र जरसा यस्मिन्नहार्यो रसः ।
> कालेनावरणात्ययात्परिणते यत्स्नेहसारे[3] स्थितं
> भद्रं तस्य सुमानुषस्य कथमप्येकं हि तत्प्राप्यते ॥ ३९ ॥

दुर्मुखः—( उपसृत्य । ) जेदु देवो । जयतु देवः ।

रामः—ब्रूहि यदुपलब्धम् ।

---

अद्वैतं सुखदुःखयोरिति ॥ ३९ ॥ यत् सुमानुषं सौजन्यम् । सुखदुःखयोर्विषये । अद्वैतं द्वैविध्यरहितम् । एकनिष्ठम् । पच्छन्दचतुष्टयं सुमानुषपरामर्शीति बोध्यम् । अवस्थासु बाल्यकौमारयौवनजरासु यत् । अनुगतं अनुसारि । विश्रामः विश्रान्तिः । यस्मिन् सति । जरसा अपीति शेषः । जरयाऽपि । रसः प्रीतिः । शृङ्गारादिर्वा । अहार्यः अपरिहार्यः । आवरणात्ययात् सङ्कोचापगमात् । सारे स्थिरांशे । यत् स्थितं तस्य सुमानुषस्येति भावप्रधानो निर्देशः । सौजन्यस्येत्यर्थः । इत्ये इति शेषः । अत एव, 'सुभगमपराद्धं' इत्यसद्व्याख्यातशाकुन्तले । 'मल्लिनं प्रसादि' इत्यसद्व्याख्यातविद्धसालभञ्जिकायां च । शोभनो मानुषो जनः येन सौजन्येन । तत् सुमानुषं इति वार्थः । 'मानुषो जनमर्त्ययोः' इति नामनिधानम् । कथमपि प्रयासेन । तत् प्रसिद्धम् । एकं मुख्यम् । भद्रं कल्याणम् । प्राप्यते हि प्रसिद्धौ ॥ तथा च मदनुरूपाया देव्याः सौजन्याय मङ्गलमाशास्महे । मया तु दुर्मुखः पौरजानपदेषु विसृष्टः किमागत्य वक्ष्यति चेति भावः । 'विश्रामं भजतां' इति, 'विश्रामशालिनं' इति च कालिदासमुरारिप्रयोगवदनुष्य कवेः विश्राम इति प्रयोगः प्रामादिक इति प्रामाणिकाः । 'प्रतिषङ्घोचयोरावरणं' इति संसारावर्तः ॥ ३९ ॥ जयतु देवः । उपलब्धं ज्ञातम् । अनुभूतं वा । उपस्तुवन्ति देवं पौरजानपदाः । यथा विस्मृता वयं महाराजं दशरथं रामदेवेनेति ॥ जानपदाः देशवासिनः ।

१ 'मनैन' घ. २ 'अनुगुणं' च–घ–क. ३ 'मेनमारे' न. ४ 'प्रेम' च–घ.
३ उ०

दुर्मुखः—उवत्थुवन्ति देवं पोरजाणवदा णिसुमराविदा अम्हे महाराअं दसरहं रामभद्देणेति। उपस्तुवन्ति देव पौरजानपदा निस्मारिता वयं महाराजं दशरथं रामभद्रेणेति।

रामः—अर्थवाद एषः। दोषं तु मे कञ्चित्कथय येन स प्रतिविधीयते।

दुर्मुखः—( सास्रम्। ) सुणादु देओ। ( कर्णे। ) एव्वं विअ। शृणोतु देव। एवमिव।

रामः—अहह तीव्रसंवेगो वाग्वज्रः। ( इति मूर्छति )

दुर्मुखः—अस्ससदु देवो। आश्वसितु देव।

रामः—( आश्वस्य। ) हा हा धिक्परगृहवासदूषणं य-
द्वैदेह्याः प्रशमितमद्भुतैरुपायैः।
एतत्तत्पुनरपि दैवदुर्विपाका-
दालर्कं विषमिव सर्वतः प्रसृतम्॥ ४०॥

तत्किमत्र मन्दभाग्य करोमि। ( विमृश्य सकरुणम् ) अथवा किमन्यत्।

सतां केनापि कार्येण लोकस्याराधनं व्रतम्।
यत्पूरितं हि तातेन मां च प्राणांश्च मुञ्चता॥ ४१॥

संप्रत्येव च भगवता वसिष्ठेन सन्दिष्टम्। अपि च।

यत्सावित्रैर्दीपितं भूमिपालै-
र्लोकश्रेष्ठैः साधु शुद्धं चरित्रम्।
मत्सम्बन्धात्कश्मला किंवदन्ती
स्याच्चेदस्मिन्हन्त धिङ्मामधन्यम्॥ ४२॥

---

अर्थवादः स्तोत्रपद्धतिः। किंचित्किंचिदिति च पाठः। येन कारणेन। शृणोतु देव, एवमिव। निर्णय इति च पाठः। आश्वसितु देव। 'हा हेति खेदातिशये' इति रत्नमाला॥ हा हा धिक् परेति॥ ४४॥ तदेतत् आलर्कं रोगिश्वसम्बन्धि। 'अलर्कस्तु खोगत' इत्यमरः। प्रसृतं व्याप्तम्॥ ४०॥ सतां केनापीति॥४१॥ तातेन दशरथेन॥ सन्दिष्टमिति–'प्रजानामनुरञ्जने स्या' इत्यष्टावक्रेण पूर्वोक्तमिति भावः॥ ४१॥ यत्सावित्रैरिति॥ ४२॥ तस्य चरित्रस्य। सम्बन्धाद्धेतोः। कश्मला तुच्छा। अस्मान् सवितृभूपालानुद्दिश्येत्यर्थः॥ ननु अहमेव पापी न खलु सावित्रा सर्वेऽपि

१ 'महाराअदसरहस्स' ब-घ-क २ 'तीव्रोऽय' न. ३ 'प्रसक्तम्' न. ४ 'किमद्य' न. ५ 'परम्'. ब. ६ 'तत्प्रतीतम्' भ, 'यत्पूजित' घ. ७ 'चित्रम्' न.

हा देवि देवयजनसम्भवे हा स्वजन्मानुग्रहपवित्रितवसुन्धरे हा निमिजनकनन्दिनि हा पावकवसिष्ठारुन्धतीप्रशस्तशीलशालिनि हा राममयजीविते हा महारण्यवासप्रियसखि हा तातप्रिये हा स्तोकवादिनि कथमेवंविधायास्तवायमीदृशः परिणामः ।

> त्वया जगन्ति पुण्यानि त्वय्यपुण्या जनोक्तयः ।
> नाथवन्तस्त्वया लोकास्त्वमनाथा विपत्स्यसे ॥ ४३ ॥

( दुर्मुखं प्रति । ) दुर्मुख ब्रूहि लक्ष्मणम् । एष ते नूतनो राजा रामः समाज्ञापयति । ( कर्णे । ) एवमेवम् ।

दुर्मुखः—हा कहं दाणिं अग्गिपरिसुद्धाए गब्भट्ठिदपवित्तसंताणाए देईए दुज्जणवअणादो एवं अणज्जं अज्झवसिदं देवेण । हा कथमिदानीमग्निपरिशुद्धायै गर्भस्थितपवित्रसन्तानायै देव्यै दुर्जनवचनादेवमनार्यमध्यवसितं देवेन ।

रामः—शान्तम् । कथं दुर्जनाः पौरजानपदाः ।

> इक्ष्वाकुवंशोऽभिमतः प्रजानां
> जातं च दैवाद्वचनीयबीजम् ।
> यच्चाद्भुतं कर्म विशुद्धिकाले
> प्रत्येतु कस्तद्यदि दूरवृत्तम् ॥ ४४ ॥

तद्गच्छ ।

दुर्मुखः—हा देइ । हा देवि । ( इति निष्क्रान्तः । )

रामः—हा कष्टम् । अतिबीभत्सकर्मा नृशंसोऽस्मि संवृत्तः ।

---

दृत्या इत्याह—धिक्त्वामिति ॥ ४२ ॥ 'नमो नम शङ्करपार्वतीभ्या' इत्यादिवत् वसिष्ठारुन्धतीति प्रयोगः क्षन्तव्य । स्तोकवादिनि मितभाषिणि ॥ त्वया जगन्ति पुण्यानीति ॥ ४३ ॥ अनाथा निराधारा । 'आधारप्रियर्योर्नाथ' इति रभसः ॥ नूतनः निर्दय इति यावत् ॥ ४३ ॥ हा कथमग्निपरिशुद्धायै गर्भस्थितपवित्रसन्तानायै देव्यै दुर्जनवचनादिदमध्यवसितं देवेन । अध्यवसितं निश्चितम् ॥ इक्ष्वाकुवंश इति ॥ ४४ ॥ वचनीयं दूषणम् । प्रत्येति विश्वसिति । तद् अग्निद्दत्तं सीतापरिशुद्धि-

---

१ 'मुनिजनक' न. २ 'प्रियस्तोकवादिनि' व–घ. ३ पवित्तदुल्लहसंताणाए' क–घ–व. ४ 'इद ववसिद' न. ५ 'शान्तं पापं शान्तं पापम् । दुर्जना नाम' न ६ 'वंशोद्भवतः' घ. ७ 'कस्तदपिदूरवृत्तम्' क–घ–व.

शैशवात्प्रभृति पोषिता प्रिये.[1]
सौहृदादपृथगाश्रयामिमाम् ।
छद्मना परिददामि मृत्यवे
सौनिको गृहशकुन्तिकामिव ॥ ४५ ॥

तदिमस्पर्शनीय पातकी देवीं दूषयामि । ( इति सीताया शिर स्वैर-मुन्नमय्य बाहुमाकर्षन् । )

अपूर्वकर्मचण्डालमयि मुग्धे विमुञ्च माम् ।
श्रितासि चन्दनभ्रान्त्या दुर्विपाक विषद्रुमम् ॥ ४६ ॥

( उत्थाय । ) हन्त विपर्यस्त सप्रति जीवलोक । अंद्यावसित जीवित-प्रयोजन रामस्य । शून्यमधुना जीर्णारण्य जगत् । असार ससार । कष्ट प्राय शरीरम् । अशरणोऽस्मि किं करोमि का गति । अथवा हा अम्ब

दु खसवेदनायेव रामे चैतन्यमाहितम् ।
मर्मोपघातिभि प्राणैर्वज्रकीलायित हृदि ॥ ४७ ॥

अरुन्धति हा भगवन्तौ वसिष्ठविश्वामित्रौ हा भगवन्पावक हा देवि भूत धात्रि हा तात जनक हा तात हा मातँ हा प्रियसख सुग्रीव हा सौम्य हनूमन् हा परमोपकारिन् लङ्काधिपते विभीषण हा सखि त्रिजटे परिमु-षिता स्थ परिभूता स्थ रामहतकेन । अथवा को नाम तेषामहमिदानी माह्वाने ।

---

लथ । दूरवृत्त लङ्काद्वीपवृत्तम् । यदि सभावनायाम् ॥ ४४ ॥ शैश-वादिति ॥ ४५ ॥ प्रियै इष्टवस्तुभि । छद्मना कैतवेन । मृत्यवे परि त्यागरूपायेति सीतापक्षे । सौनिक मृगपक्षिहिंसाशील ॥ ४५ ॥ अस्पर्श नीय नीच । दूषयामि अङ्गस्पर्शेनेति भाव ॥ अपूर्वकर्मेति ॥ ४६ ॥ अपूर्वं कैरप्येव न कृतमित्यर्थ ॥ ४६ ॥ विपाक परिणाम ॥ विपर्यस्त व्यत्यस्तः । अवसितं अवसान प्राप्त शून्यं वस्तुरहितम् । जीर्णं शुष्कम् । अरण्यं वनम् ॥ दु खसवेदनायेति ॥ ४७ ॥ यस्मिन् सवेदनं ज्ञानम् । चेतन्यं नाम । उपघातिभि प्रहारिभि कीलवत् शङ्कुवत् आचरितम् । प्राणव्याजाच्छङ्कवो हृदि निखाता इत्यर्थ । अत एवाद्यापि मयि चैतन्य वर्तत इति भाव ॥ ४७ ॥ भूतधात्रि वसुधे । तात दशरथ । जनक वैदेह ।

---

१ 'प्रियाम्' ब–न–क २ 'पृथगाशया प्रियाम्' घ 'पृथगाशयामिमाम्' व ३ 'सौनिके' न ४ 'पर्यवसितमद्य क, 'पर्यवसित जीवित॰' ब–घ ५ 'आग तम्' न ६ 'स्थिरे ' व घ ७ 'मातर' ब–घ–क ८ 'कश्च' व–घ

ते हि मन्ये महात्मानः कृतघ्नेन दुरात्मना ।
मया गृहीतनामानः स्पृश्यन्त इव पाप्मना ॥ ४८ ॥

सोऽहम्

विस्रम्भादुरसि निपत्य लब्धनिद्रा-
मुन्मुच्य प्रियगृहिणीं गृहस्य शोभाम् ।
आतङ्कस्फुरितकठोरगर्भगुर्वी
क्रव्याद्भ्यो बलिमिव निर्घृणः क्षिपामि ॥ ४९ ॥

( सीताया पादौ शिरसि कृत्वा ) देवि देवि अयं पश्चिमस्ते रामशिरसा पादपङ्कजस्पर्शः । ( रोदिति । )

( नेपथ्ये ) अब्रह्मण्यमब्रह्मण्यम् ।

रामः—ज्ञायतां भोः किमेतत् ।

( पुनर्नेपथ्ये ) ऋषीणामुग्रतपसां यमुनातीरवासिनाम् ।
लवणत्रासितः स्तोमः शरण्यं त्वामुपस्थितः ॥ ५० ॥

रामः—आः कथमद्यापि राक्षसत्रासः । तद्यावदस्य दुरात्मनो माथुरस्य कुम्भीनसीपुत्रलोन्मूलनाय शत्रुघ्नं प्रेषयामि । ( कतिचित्पदानि गत्वा पुनर्निवृत्य ) हा देवि कथमेवंगता भविष्यसि । भगवति वसुन्धरे सुश्लाघ्यां दुहितरमवेक्षस्व जानकीम् ।

जनकानां रघूणां च यत्कृत्स्नं गोत्रमङ्गलम् ।
यां देवयजने पुण्ये पुण्यशीलामजीजनः ॥ ५१ ॥

---

मातः कौसल्ये । अशोकवने पूर्वं शुरा ( भ ? ) स्वप्नकथनात्रिजटालरणमिति बोध्यम् । परि परितश्चेत्यर्थः । 'हतको नीचः' इति जयः ॥ ते हि मन्ये इति ॥ ४८ ॥ पाप्मना दुरितेन ॥ ४८ ॥ विस्रम्भादुरसीति ॥ ४९ ॥ विस्रम्भः विश्वासः । प्रिया चासौ गृहिणी ताम् । आतङ्केन आयासेन । स्फुरितः चलित , कठोरः पूर्णः गर्भः तेन गुर्वी अलघुम् । 'आयारभीलोरातङ्क' इति शाश्वतः । क्रव्याद्भ्यः राक्षसेभ्यः । आमिषे पलं इत्यर्थः ॥ ४९ ॥ रोदितीत्यादिकमश्लीलं नाटकाप्रयोज्यमपि 'सर्वं च भक्ष्यं कुलं' इत्यादिवदुपेक्षणीयम् । 'अब्रह्मण्यमवध्योक्तौ' इत्यमरः । लवणः राक्षसभेद । मधुराया नगर्यां निवासी तत्सम्बन्धी वा माथुरः॥जनकानां रघूणामिति ॥ ५१ ॥ जनकाः जनकवंश्या रघवः रघुवंश्या राजानः । गो-

---

१ 'आत्तनिद्राम्' म. २ 'लक्ष्मीम्' न. ३ 'शिरसि' न. ४ 'आगारम्' म. ५ एतन्नास्ति च-घ-क-पुस्तकेषु. ६ 'ताम्' च-घ.

(इति रुदन्निष्क्रान्तः ।)

**सीता**—हा सोम्म अज्जउत्त कहिं सि । (सहसोत्थाय ।) हद्धी हद्धी दुस्सिविणेण विप्पलद्धा अहं अज्जउत्तसुण्णं विअ अत्ताणं पेक्खामि। (विलोक्य।) हद्धी हद्धी एआइणिं मं पसुत्तं उज्झिअ गदो अज्जउत्तो । किं दाणीं एदं । होदु । से कुप्पिस्सं जइ तं पेक्खन्ती अत्तणो पहविस्सं। को एत्थ परिअणो। हा सौम्य आर्यपुत्र कुत्रासि । हा धिक् हा धिक् दुःस्वप्नेन विप्रलब्धाहमार्यपुत्रशून्यमिव आत्मानं प्रेक्षे। हा धिक् हा धिक् एकाकिनीं मां प्रसुप्तामुज्झित्वा गत आर्यपुत्रः । किमिदानीमेतत्। भवतु तस्मै कोपिष्यामि यदि तं प्रेक्षमाणात्मनः प्रभविष्यामि। कोऽत्र परिजनः ।

(प्रविश्य ।) **दुर्मुखः**—देइ कुमारलक्खणो विण्णवेदि सज्जो रहो। आरुहदु देई त्ति। देवि कुमारलक्ष्मणो विज्ञापयति सज्जो रथः । आरोहतु देवीति ।

**सीता**—इअं आरुहामि । (उत्थाय परिक्रम्य) फुरइ मे गब्भभारो सणिअं गच्छह्म। इयमारोहामि। स्फुरति मे गर्भभारः । शनैर्गच्छाव ।

**दुर्मुखः**—इदो इदो देवी। इत इतो देवी ।

**सीता**—णमो तपोधणाणं णमो रहुउलदेअदाणं णमो अज्जउत्तचरणक-

---

ञस्य वशस्य । मङ्गलानुगुण्येन यदिति नपुंसकनिर्देशः । अत एव 'शैत्यं हि यत्सा प्रकृतिर्जलस्य' इति भर्तृमीढः । अजीनन इति अर्थात् त्वमिति सिद्धम् । अत्र यदिति यामिति च यच्छब्दद्वयमुत्तरवाक्योक्तमिति पूर्ववाक्ये तच्छब्दानियमः । अत एव, 'आभाति यत्कृति'रिति असकृद्व्याख्यातभोजचम्पौ ॥ ५१ ॥ हा आर्यपुत्र शून्यमिवात्मानं पश्यामि । अप्पाणमित्यत्र 'आत्मनि पः' इति पत्वम् । हा धिक् हा धिक् एकाकिनीं प्रसुप्तां मां समुज्झित्य गत आर्यपुत्रः । भवतु अस्मै कुप्यामि यदि तं पश्यन्ती आत्मनः प्रभविष्यामि । कोऽत्र परिजनः । कुप्यामीत्यत्र कुप्पिस्सं इति पाठे कोपिष्यामीत्यर्थः । कुपिता भविष्यामीति यावत् ॥ देवि कुमारलक्ष्मणो विज्ञापयति । सज्जो रथः । आरोहतु देवी, इति । इयमारोहामि स्फुरति मे गर्भभारः । शनैः शनैर्गच्छाम । इत्थं पुरुषसमक्षं निस्सङ्कोचतया कथनं कवेश्चातुर्यम् । अस्माकं तु निभाति—स्वगतम्—फुरइ मे गब्भभारो । प्रकाशम्—सणिअं गच्छामो । इति पाठक्रमः कल्पनीयस्तावदत्र विशेषज्ञाः प्रमाणमिति ॥ इत इतो देवी । नमो रघुकुलदेवताभ्य इति दिक् ॥ इति महाराजपदमहनीयतुक्काजिराजगृहामात्येन भार्गवकुलाकूपारचन्द्रचौण्डोबालाजिपौत्रेण कौण्डिन्यगोत्रपारावारनिस्तुलकौस्तुभमति-

---

१ 'अहं अज्जउत्तं आक्कंदामि' ख-घ-क

मलाणं नमो समस्तगुरुअणाणं । नमस्तपोधनेभ्यो नमो रघुकुलदेवताभ्यो नमो आर्यपुत्रचरणकमलेभ्यो नमः सकलगुरुजनेभ्यः ।

( इति निष्क्रान्ताः सर्वे । )

इति महाकविश्रीभवभूतिविरचिते उत्तररामचरिते
चित्रदर्शनो नाम प्रथमोऽङ्कः ।

---

श्माजिनाल्ह्जिदहिंत्रेण काशीमहादेवतनूजेन शाकम्भरीपरमहंसचिदम्बरब्रह्मानुजेन नवरसभुक्तातिशायिचतुश्चतुरधिकषष्टिप्रबन्धिदशभाषाभव्यकाव्याष्टपदीपदप्रयवर्णविलसन्न्यूनाक्षरमाणिक्यार्थल्लवनकवनधौरन्धरीपारीणेन गीतगाथासहस्रचतुष्टयदिव्यदेशीताटङ्कलिपिकल्पकेन दुर्जनानिनिन्द्येन सज्जनाभिनन्द्येन सुन्दरीकमलाजानिना वश्यवाच सर्वज्ञसरस्वतीनामत्रयमण्डितेन रामनवमीदिनोत्सवजागरण एवारब्धपरिपूरिते उत्तररामचरितसञ्जीवनाख्यटिप्पणे प्रथमोऽङ्कः समाप्तः ॥

॥ इति घनश्यामपण्डितविरचिते व्याख्याने प्रथमोऽङ्कस्सम्पूर्णः शुभमस्तु ॥

## ॥ द्वितीयोऽङ्कः ॥

नेपथ्ये । स्वागतं तपोधनायाः ।

( ततः प्रविशत्यध्वगवेषा तापसी । )

**तापसी**—अये वनदेवतेयं फलकुसुमगर्भेण पल्लवार्घ्येण दूरान्मामुपतिष्ठते ।

प्रविश्य । **वनदेवता**—( अर्घ्यं विकीर्य । )

यथेच्छं भोग्यं वो वनमिदमयं मे सुदिवसः
सतां सद्भिः सङ्गः कथमपि हि पुण्येन भवति ।
तरुच्छाया तोयं यदपि तपसो योग्यमशनं
फलं वा मूलं वा तदपि न पराधीनमिह वः ॥ १ ॥

**तापसी**—किमत्रोच्यते ।

प्रियप्राया वृत्तिर्विनयमधुरो वाचि नियमः
प्रकृत्या कल्याणी मतिरनवगीतः परिचयः ।

---

अथ द्वितीयोऽङ्कः ॥ अथ भूतभवद्भविष्यदादिनिवृत्तकथोपक्षेपेण द्वितीयाङ्कार्थं क्रोडीकरिष्यन् कविः शुद्धविष्कम्भं प्रक्रममाणः, 'नासूचितस्य पात्रस्य प्रवेशो निर्गमोऽपि च' इति लक्षणादुपयुक्तपात्रप्रयुक्तवेशपरम्परासम्बन्धेन सूचयति—नेपथ्ये इति ॥ **स्वागतमिति**—वासन्तीनाम्ना वनदेवतया कृतः प्रश्न इत्यूह्यम् । वासन्ती त्वमिति कविनाऽग्रे वक्ष्यते । **तपोधनेति तापसीति** च एकमेव पात्रम् । 'तापसस्तु तपोधनः' इति विक्रमार्कः । **फलकुसुमानि गर्भे** मध्यभागे यस्य । सीताराम इतिवत् पल्लवयुक्तमर्घ्यं **पल्लवार्घ्यम्** तेनेत्यर्थः ॥ 'फलशस्यपुष्पाद्यैः तापसेष्वर्घ्यमाहरेत्' इति स्मरणात् । 'निष्वर्घ्यमर्घार्थे' इत्यमरः ॥ **यथेच्छाभोग्यमिति** ॥ १ ॥ यथेच्छं आसमन्ताद् भोक्तुं योग्यं **यथेच्छाभोग्यम्** । वः इति पूजायां बहुत्वम् । **सतां सद्भिरिति**—सत्यश्च सन्तश्च सन्तः तेषां सताम् । तैः सद्भिः साधुभिरित्यर्थः । प्रकृते सत्या मम सत्या त्वया सङ्गः सहवासः इत्यूह्यम् ॥ 'जात्वर्थे स्यात्कथमपि' इति **नाममाला** । **न पराधीनमिति** स्वाधीनमित्यर्थः । अपिरेकोऽधिकः पश्चाधिक इति केचित् ॥ १ ॥ अत्र सत्राकृतौ । **प्रियप्राया वृत्तिरिति** ॥ २ ॥ **प्रियस्य** इष्टवस्तुनः **प्रायः** आधिक्यं यस्यां सा । 'प्रियमिष्ट' इति 'प्रायो भूम्नि' इति वै-

---

१ 'फलकुसुमपल्लवार्घ्येण माम्' ख–घ–फ. २ 'वितीर्य' इति न. ३ 'यथेच्छाभोग्यम्' न ४ 'विनयमसृण' ख.

पुरो वा पश्चाद्वा तदिदमविपर्यासितरसं
रहस्यं साधूनामनुपधि विशुद्धं विजयते ॥ २ ॥

( उपविश्य । )

वनदेवता—कां पुनरत्रभवतीमवगच्छामि ।

तापसी—आत्रेय्यस्मि ।

वनदेवता—आर्ये आत्रेयि कुतः पुनरिहागम्यते । किंप्रयोजनो वा दण्डकारण्यप्रवेशः ।

आत्रेयी—अस्मिन्नगस्त्यप्रमुखाः प्रदेशे
भूयांस उद्गीथविदो वसन्ति ।
तेभ्योऽधिगन्तुं निगमान्तविद्यां
वाल्मीकिपार्श्वादिह पर्यटामि ॥ ३ ॥

---

जयन्त्यमरो । 'मर्यादाचरणे वृत्ति' इति नामनिधानम् । नियमः व्रतम् । प्रकृत्या स्वभावेन । अनवगीतः अनिन्द्यः । अविपर्यासितः अप्रजातविपर्ययः । रसः प्रीतिः अभिनिवेशो वा यस्मिन् । अनुपधि अकैतवम् । विशेषेण शुद्धम् । तदिदं रहस्यम् । 'विपर्यासो वैपरीत्ये' इति, 'प्रीतावभिनिवेशे च रसः' इति, 'रहस्योपांशु चालिङ्गे रहस्यं तद्भवे त्रिषु' इति च केशवमेदिन्यमराः ॥ २ ॥ आत्रेयी अत्रेः शिष्या गोत्रोद्भवा वा । न जानि विप्रतिपत्ति । पुनः वाक्यालङ्कारे । किं प्रयोजनं यस्मिन् प्रवेशे सः किंप्रयोजनः ॥ अस्मिन्नगस्त्य इति ॥ ३ ॥ भूयांस उद्गीथविद इति सन्धिश्छन्दोविदार्षवदनुग्राह्यम् । अत एव 'आये रमे इलपि' इत्यलघ्वाख्यातभारचम्पौ । उद्गीथो नाम साम्नो द्वितीया भक्तिः । तद्विद इत्यर्थः । 'ओमित्येतदक्षरमुद्गीथमुपासीत' इति छान्दोग्ये । अधिगन्तुं प्राप्तुम् । निगमान्तः वेदान्तः । पर्यटामि चरामि ॥ यदा चलामीति च पाठः । पुराणं पुरातनं च तद् ब्रह्मेति पुराणेषु स्थितं वा तद्वादीति कश्चिदाह तन्न भवत्यास्तेऽनुग्राहके सति वाल्मीकिनाभिहतं पुराणब्रह्मवादीति कथनस्यानौचित्यात् । तथानुग्राहकत्वं रामाय कृतधनुरर्पणप्रसादस्य 'ततो युद्धपरिश्रान्तं' इत्यादिनोपदिष्टवतो भगवतोऽगस्त्यस्याश्रमवर्णने हृदयवसतेरपास्यपदाम्बुजस्य शिवस्य स्थाने विना विष्णो स्थानं इति विष्ण्वादिस्थानानां व्यवस्थापितत्वेन रामायणे सुप्रसिद्धम् । प्रकृते कथाप्रपञ्चाय कविना वाल्मीकिप्रस्तावः कृत इति

---

१ 'प्रचारः' क-ख, 'स्मोदवनप्रचारः' ग, 'किं प्रयोजनं वा दण्डकारण्यप्रवेशस्य' घ.

**वनदेवता**—यदा तावदन्येऽपि मुनयस्तमेव हि पुराणब्रह्मवादिनं प्राचेतसमृषिं ब्रह्मपारायणायोपासते तत्कोऽयमार्याया दीर्घप्रवासप्रयासः।

**आत्रेयी**—तत्र महानध्ययनप्रत्यूह इत्येष दीर्घप्रवासोऽङ्गीकृतः।

**वनदेवता**—कीदृशः।

**आत्रेयी**—तस्य भगवतः केनापि देवताविशेषेण सर्वप्रकाराद्भुतं स्तन्यत्यागमात्रके वयसि वर्तमानं दारकद्वयमुपनीतम्। तत्खलु न केवलमृषीणामपि तु चराचराणां भूतानामान्तराणि तत्त्वान्युपस्नेहयति।

**वनदेवता**—अपि तयोर्नामसंविज्ञानमस्ति।

**आत्रेयी**—तयैव किल देवतया तयोः कुशलवाविति नामनी प्रभावश्चाख्यातः।

**वनदेवता**—कीदृशः प्रभावः।

**आत्रेयी**—तयोः किल सरहस्यानि जृम्भकास्त्राण्याजन्मसिद्धानीति।

**वनदेवता**—अहो नु भोश्चित्रमेतत्।

**आत्रेयी**—तौ च भगवता वाल्मीकिना धात्रीकर्मतः परिगृह्य पोषितौ

---

बोध्यम्। प्राचेतसं वाल्मीकिम्। उपासते उपासनां कुर्वन्ति। तदिति ततस्तदा इति च पाठेऽपि तस्मादित्येवार्थः। यमेति ध्वनिः। प्रत्यूहः विघ्नः। दीर्घप्रवास इति ध्वनिः। तत्रभगवतः वाल्मीकेः। देवताविशेषेण। गङ्गयेत्यर्थः। इदं च तृतीयाङ्कविष्कम्भे स्पष्टीभविष्यति। 'प्रकारो लक्षणेऽपि च' इति यादवः। स्तनयोः त्यागमात्रं यस्मिन् वयसि। 'कात्स्न्यें मात्रेऽवधारणे' इत्यमरः। मात्रक इति स्वार्थे कः। अत एव 'उपवागादिपुण्यकः' इति चतुर्वर्गः। 'समोक्षकं' इति च अमरसिंहेनोक्तम्। दारकौ पुत्रौ। उपनीतं समीपे आनीतमिति यावत्। समीपे तत्रभवत इति पूर्वेणान्वयः। अपि तु किन्तु इत्यर्थः। भूतानां प्राणिनाम्। आन्तराणि बाह्येतराणि। तत्त्वानि करणानि अङ्गानि वा। तथा च अन्तःकरणानि अन्तरङ्गानि वेत्यर्थः॥ 'तत्त्वं तु करणात्रयो' इति संसारावर्तः। स्नेहयुक्तानि करोति स्नेहयति। 'चिह्ने सज्ञानं' इति नामनिधानम्। 'रहस्यं तु मन्त्रे च' इति केदारः। अति भृशम्। चित्रं आश्चर्यम्॥ 'अत्यतीवातीवतराम्' इति त्रिरूपः। हिशब्दो वाक्यालङ्कारे। भो इति स्वमनः प्रति संबोधनम्। 'संबोधने तु हे है भोः' इति रत्नमाला।

---

१ 'केवल तस्य अपि तु तिरश्चामप्यन्तःकरणानि तत्त्वानि' न. २ °'कर्मेव स्तुत' व, 'कर्म वस्तुत' घ-क.

रक्षितौ च । निर्वृत्तचौलकर्मणोश्च तयोस्त्रयीवर्जमितरास्तिस्रो विद्याः सावधानेन परिनिष्ठापिताः । समनन्तरं च गर्भैकादशे वर्षे क्षात्रेण कल्पेनोपनीय गुरुणा त्रयीविद्यामध्यापितौ । न ह्येताभ्यामतिप्रदीप्तप्रज्ञामेधाभ्यामस्मदादेः सहाध्ययनयोगोऽस्ति । यतः ।

वितरति गुरुः प्राज्ञे विद्यां यथैव तथा जडे
न तु खलु तयोर्ज्ञाने शक्तिं करोत्यपहन्ति वा ।
भवति च तयोर्भूयान्भेदः फलं प्रति तद्यथा
प्रभवति शुचिर्बिम्बग्राहे मणिर्न मृदादयः ॥ ४ ॥

वनदेवता—अयमसावध्ययनप्रत्यूहः ।

आत्रेयी—अपरश्च ।

वनदेवता—अथापरः कः ।

आत्रेयी—अथ स ब्रह्मर्षिरेकदा माध्यन्दिनसवनाय नदीं तमसामनुप्रपन्नः । तत्र युग्मचारिणोः क्रौञ्चयोरेकं व्याधेन विध्यमानं ददर्श । आकस्मिकप्रत्यवभासां च देवीं वाचमव्यतिकीर्णामानुष्टुभेन छन्दसा परिणताम-भ्युदैरयत् ।

---

धात्रीकर्मतः उपमातृकृत्यादितो । अन्नपानादिभिः पोषितौ हिंस्रजन्तुभ्यो रक्षितावित्यर्थः । त्रयी वेदत्रयी वर्ज्या यस्मिन् कर्मणि तत् त्रयीवर्ज्यं यथा तथा । तिस्रो विद्याः अक्षराभ्यास, मुरलीविहार, वाहनायुधशिक्षा चेति । परिनिष्ठापिताः परि परितः, निष्ठा विद्यानामन्तं प्रापिता इत्यर्थः । 'निष्ठा निष्पत्तिनाशान्ताः' इत्यमरः । दीप्तता प्रकाशः । योगः सुगतिः युक्तिर्वा ॥ वितरति गुरुरिति ॥ ४ ॥ तयोः प्राज्ञजडयोः । फलं सिद्धिम् । प्रति उद्दिश्य । तदेवोपपादयति—तद्यथेति ॥ शुचिः निर्मलः । 'बिम्बमा-वृतौ' इति हैमः । मणिः दर्पणः । आदिशब्देन काष्ठादीनि गृह्यन्ते । अत्र तुहिशब्दौ पादपूरणौ । हि प्रसिद्धाविति केचित् ॥ ४ ॥ तमसा नदीविशेषः । तत्र तमसायाम् । तमसातीरे इति यावत् । गङ्गायां घोष इत्यादिवदत्र । युग्मेन द्वन्द्वेन चरतोः युग्मचारिणोः । अकस्मात् अनवशात् भवः आकस्मिकः । प्रत्यवभासः स्फूर्तिः यस्याः ताम् । अव्यतिकीर्णां विशेषेणाम-कीर्णाम् । सुविभक्तामित्यर्थः । शब्दार्थसन्दर्भादिभिः प्रगल्भामिति यावत् ।

---

१ 'वृत्तचूडौ च त्रयी०' ग; 'वृत्तचौलकर्मणोश्च तयोस्त्रयी०' घ. २ 'परिष्ठापितौ' घ. ३ 'तदनन्तरं भगवतैकादशे' न. ४ 'पुनर्' इति न-क. ५ 'बिम्बोद्ग्राहे' ग-घ. ६ 'मृदां चयः' क-ख-ग. ७ एतन्नास्ति न-पुस्तके, '°कीर्णवर्णाम्' क-ख.

मा निषाद प्रतिष्ठां त्वमगम शाश्वती समा ।
यत्क्रौञ्चमिथुनादेकमवधी काममोहितम् ॥ ५ ॥

वनदेवता—चित्रमाम्नायादन्यो नूतनश्छन्दसामवतार ।

आत्रेयी—तेन खलु पुन समयेन त भगवन्तमाविर्भूतशब्दब्रह्मप्रकाशमृषिमुपसङ्गम्य भगवान् भूतभावन पद्मयोनिरवोचत्—'ऋषे प्रबुद्धोऽसि वागात्मनि ब्रह्मणि तद्ब्रूहि रामचरितम्। अव्याहतज्योतिरार्षं ते' प्रतिभाचक्षु । आद्य कविरसि' इत्युक्त्वा तत्रैवान्तर्हित । अथ स भगवान्प्राचेतस प्रथम मनुष्येषु शब्दब्रह्मणस्तादृश विवर्तमितिहास रामायण प्रणिनाय ।

---

अभ्युदैरयत् उदीरयामास ॥ मा निषाद प्रतिष्ठामिति ॥ ५ ॥ निषाद व्याध । शाश्वती ध्रुवा । समा संवत्सरान् वर्षशतमित्यर्थ । 'काला ध्वनो ' इति द्वितीया । प्रतिष्ठा स्थितिम् । मा गम मा गच्छ ॥ ननु 'न माङ्योगे' इति अडागमप्रतिषेधात् कथ अगम इति चेन्न । 'मा देवि दैन्यम गम शुभचिह्नमेतत्त्वां पुष्पक वहति यत्' इति दण्डिकाव्ये प्रयोगदर्शनान्न दोष ॥ अथवा—अगम इत्यत्र अ इति च पदद्वयम् । तथा च मा निषाद भो व्याधेत्यर्थ । 'आहो भो हे निमन्त्रणामुत्र सम्बोधनार्थका' इति केदार । केचित्तु—मागम नागम इत्यर्थ । 'न ना नो मेत्यभावे स्यु' इत्यगस्त्य इत्याहु । आर्षं तु नाक्षेपमर्हतीत्यन्ये पेठु । जीवतामेव वचने दोषपाण्डित्य दुर्जना दर्शयन्तीति । अन्येषां तु पुष्पोत्पाटनमपि कर्तुं नालममीति राघवो निगदन्तीति दिक् ॥ ५ ॥ आम्नायात् वेदात् । तेन प्रसिद्धेन । समयेन संविदा । छन्दोरूपया चिदेत्यर्थ । उपलक्षितम् । 'समय कालसंविदो' इति रुद्र । भगवन्तं माहात्म्यशालिन कीर्तिमन्त वा, भगवान् षाड्गुण्यपरिपूर्ण । भूतान् चराचरान् भावयति जनयतीति वा भूताना भावना भक्ति यस्मिन्निति वा भूतभावन । 'भावस्सत्तात्मनन्तुषु' इति हेमचन्द्र । 'भावना भक्तौ' इति धरणि । यादृशी भावनेति वस्तुनिर्णय । प्रबुद्ध बुद्धबोध यस्य । वागात्मनि शब्दरूपे ब्रह्मणि इत्यनेन पर ब्रह्माऽधिगमिष्यसीति भाव ॥ 'शब्दब्रह्मणि निष्णात पर ब्रह्माधिगच्छति' इति स्मरणात् । अव्याहत अप्रतिहत ज्योति तेज प्रसर यस्य तत् । प्रतिभैव चक्षु । 'प्रज्ञा नवनवोन्मेषशालिनीं प्रतिभा विदु' इति भाव । आद्य प्रथम भव इत्यर्थ । अत्रैव देव्या प्रसादपात्रीकृतत्वादिति भाव । आद्य वरो वा । 'वराद्यतनयोराद्य' 'प्रथमज्येष्ठयोर्गुरौ' इत्यगस्त्य ॥ प्रथम इति केचित् ॥ तन्न ॥ वाल्मीकेरर्वाक् कविताया प्रत्यक्षविरोधात्, इद कविभ्य इति नान्दी

---

१ 'आम्नायादन्यत्र' न २ 'ते प्रातिभ चक्षु 'क-घ-व, 'ते चक्षु प्रतिभातु' न

वनदेवता—हन्त तर्हि मण्डितः संसारः ।

आत्रेयी—तस्मादवबोधं तत्र हि महानध्ययनप्रत्यूह इति ।

वनदेवता—युज्यते ।

आत्रेयी—विश्रान्तास्मि भद्रे । संप्रत्यगस्त्याश्रमस्य पन्थानं ब्रूहि ।

वनदेवता—इतः पञ्चवटीमनुप्रविश्य गम्यतामनेन गोदावरीतीरेण ।

आत्रेयी—( सास्रम् ) अप्येतत्तपोवनम् । अप्येषा पञ्चवटी । अपि सरिदियं गोदावरी । अप्ययं गिरिः प्रस्रवणः । अपि जनस्थानवनदेवता वासन्ती त्वम् ।

वनदेवता—तथैव तत्सर्वम् ।

आत्रेयी—हा वत्से जानकि ।

स एष ते वल्लभशाखिवर्गः
　प्रासङ्गिकीनां विषयः कथानाम् ।
त्वां नामशेषामपि दृश्यमानः
　प्रत्यक्षदृष्टामिव नः करोति ॥ ६ ॥

---

पद्यस्य गद्यपद्यतानिच्छेदापत्तेश्च ॥ न च वाच्य—'आदिकाव्यमिदं प्रोक्तं पुरा वाल्मीकिना कृतम् । वेदः प्राचेतसादासीत्साक्षाद्रामायणात्मना ॥' इत्यादिवचनानां का गतिरिति, 'नारदं परिपप्रच्छ वाल्मीकिर्मुनिपुङ्गवम्' इति प्रश्नेनैव आद्यकवित्वोच्छेदात्, तेषां वचनानामर्थवादपरत्वमनुसन्धेयम् । किंच वाल्मीकिस्विनारदस्याप्याद्यकवित्वं न सद्योभवतीति, 'मुने वक्ष्याम्यहं बुद्ध्वा' इति तेनैव कथनात् । तस्माद् 'वाल्मीकिना कृतम्' इत्यादीनां 'अष्टादशपुराणानां कर्ता सत्यवतीसुतः' इत्यन्येषां वचनानां पूर्वपक्षतया दौर्बल्यात्, 'यस्य निश्वसितं वेदाः सेतिहासाः सहागमाः' इति सिद्धान्तवचनप्राबल्येन वाल्मीकिव्यासादयः सर्वेऽपि प्रवचनकर्तार इति महान्तो निगदन्ति । शिष्यडिम्भाः किंचिदपि न जानीमहे वयम् । विशेषज्ञा एवात्र प्रमाणम् । इति दिक् ॥ **तत्रैवेति**–यत्र प्रदेशे अवोचत् तत्रैवेत्यर्थः । **प्रथमं** आदौ । **तादृशं** अनिर्वाच्यम् । **विवर्तः** परिणामः । 'इतिहासः पुरावृत्तं' इत्यमरः । **अवोचं** उक्तवत्यस्मि । अर्थादहमिति सिद्धम् । **भद्रे** इति संबोधनम् । 'अपि प्रश्ने च' इति हलायुधः । **तदिति**–त्वया यथा तर्कितं तदेतत्सर्वं तथैवेति यावत् । अथ किमिति बाढमिति च पाठौ ॥ **स एष ते इति** ॥ ६ ॥ **वल्लभाः** प्रियाश्च ते **शाखिनः** वृक्षाः । यद्यपि व्यस्तं

---

१ 'मण्डितः' घ–थ–न. २ 'तस्मादवोच वत्सुरोधात्त्वत्र' घ. ३ 'अन्वेदं सर्वम्' क–घ–च. ४ 'वल्लभाः' क–घ–च. ५ 'प्रत्यक्षदृष्टाम्' क–घ–च. ४ च.

**वासन्ती**—( सभयम् । स्वगतम् ) कथं नामशेषामित्याह ।
( प्रकाशम् । ) आर्ये किमत्याहितं सीतादेव्याः ।

**आत्रेयी**—न केवलमत्याहितं सापवादमपि । ( कर्णे । ) एवमेवम् ।

**वासन्ती**—अहह दारुणो दैवनिर्घातः । ( इति मूर्च्छति । )

**आत्रेयी**—भद्रे समाश्वसिहि समाश्वसिहि ।

**वासन्ती**—हा प्रियसखि हा महाभागे ईदृशस्ते निर्माणभागः । हा रामभद्र । अथवा अलं त्वया । आर्ये आत्रेयि अथ तस्मादरण्यात्परित्यज्य निवृत्ते लक्ष्मणे सीतादेव्याः किं वृत्तमिति काचिदस्ति प्रवृत्तिः ।

**आत्रेयी**—नहि नहि ।

**वासन्ती**—हा कष्टम् । आर्यारुन्धतीवसिष्ठाधिष्ठितेषु रघुकदम्बकेषु जीवन्तीषु च प्रवृद्धासु राज्ञीषु कथमिदं जातम् ।

**आत्रेयी**—ऋष्यशृङ्गाश्रमे गुरुजनस्तदासीत् । संप्रति तु परिसमाप्तं तद्द्वादशवार्षिकं सत्रम् । ऋष्यशृङ्गेण च सम्पूज्य विसर्जिता गुरवः । ततो भगवत्यरुन्धती नाहं वधूविरहितामयोध्यां गमिष्यामीत्याह । तदेव राममातृभिरनुमोदितम् । तदनुरोधाद्भगवतो वसिष्ठस्य परिशुद्धा वाचो वाल्मीकितपोवनं गत्वा तत्र वत्स्याम इति ।

---

विशेषणं चारु, तथापि सर्वे शैला इत्यादिवदिदं समाधेयम् ॥ स्मृतस्योपेक्षानर्हत्वं प्रसङ्ग । प्रसङ्गभव प्रासङ्गिक । नाम्ना नाम्नि विशेष ( वा शेषाम् ? ) **दृश्यमानः** । मयेति शेष । मे मद्यम् । **त्वां प्रत्यक्षदृष्टामिव करोति** । मे इत्यत्र न इति पाठे अस्मभ्यमित्यर्थ । अत्र निर्वेदाद्बहुवचनत्वम् । अत एव । 'वय तत्त्वान्वेषात्' इत्यस्मद्व्याख्यातशाकुन्तले । **वल्लभः** रामो वा । ते वल्लभेत्यत्र 'रतेर्गृहीतानुनयेन' इतिवदुपपत्ति ॥ वनदेवतानामपरिज्ञानेन **वासन्तीति** व्यवहार कृत इति बोध्यम् ॥ ६ ॥ **अत्याहितं** महाभीति । **अपवादः** कौलीनम् । **एवमिवेति**–रामेण सीता परित्यक्तेत्यादिवृत्तमुक्तमिति बोध्यम् । दैवमेव **निर्घातः** वज्रनिर्घोषः । **भागः** अंश । **अलमिति** कृतमित्यर्थ । कोपखेदाभ्यामलमित्युक्तमिति भाव । 'वृत्तं चरित्रे' इत्यमर । **प्रवृत्तिः** वार्ता ध्वनिश्च । **आर्यौ** च तौ **अरुन्धतीवसिष्ठौ** ताभ्याम् । **कुलेष्विति** पूजायां बहुत्वम् । **गुरवः** वसिष्ठादय । **अनुरोधः** अनुवर्तनम् । 'श्रद्धा त्वासक्ति' इति **पदमाला** । ध्वनिश्च । क आचारः आचरणं यस्य **किमाचारः** । **क्रतुराजः** यज्ञश्रेष्ठ । **प्रक्रान्तः** आरब्ध ।

---

१ 'रघुकुलकदम्बकेषु' घ. २ 'वसिष्ठस्यापि श्रद्धा' न.

वासन्ती—अथ स राजा किमाचार सम्प्रति ।

आत्रेयी—तेन राज्ञा क्रतुरश्वमेध प्रक्रान्त ।

वासन्ती—हा धिक् परिणीतमपि ।

आत्रेयी—शान्त पापम् । नहि नहि ।

वासन्ती—का तर्हि यज्ञे सहधर्मचारिणी ।

आत्रेयी—हिरण्मयी सीताप्रतिकृति ।

वासन्ती—हन्त भो ।

वज्रादपि कठोराणि मृदूनि कुसुमादपि ।
लोकोत्तराणा चेतासि को नु विज्ञातुमर्हति ॥ ७ ॥

आत्रेयी—विसृष्टश्च वामदेवाभिमन्त्रितो मेध्योश्व । उपकल्पिताश्च तस्य यथाशास्त्र रक्षितार । तेषामधिष्ठाता च लक्ष्मणात्मजश्चन्द्रकेतुरवाप्त दिव्यास्त्रसम्प्रदायश्चतुरङ्गसाधनान्वितोऽनुप्रहित ।

वासन्ती—( सस्नेहकौतुकास्रम् । ) कुमारलक्ष्मणस्यापि पुत्र । हन्त मातर्जीवामि ।

आत्रेयी—अत्रान्तरे ब्राह्मणेन मृत पुत्रमुत्क्षिप्य राजद्वारे सोरस्ताडम-ब्रह्मण्यमुद्घोषितम् । ततो न राजापचारमन्तरेण प्रजानामकालमृत्यु संचरती-त्यात्मदोष निरूपयति करुणामये रामभद्रे सहसैवाशरीरिणी वागुदचरत्—

शम्बूको नाम वृषल पृथिव्या तप्यते तप ।
शीर्षच्छेद्य स ते राम तं हत्वा जीवय द्विजम् ॥ ८ ॥

---

भो इति मन प्रति सबोधनम् ॥ वज्रादपि कठोराणीति ॥ ७ ॥ लोकोत्तराणा भुवनश्रेष्ठानाम् । 'सर्वं कृत्य साधु सर्वोत्तरेणम्' इति भारवि । सीतापरित्यागेन रामचेतस कठोरत्व अपुन परिणयेन मृदुत्व चेति भाव ॥७॥ मेध्य पवित्र । प्रयुक्ता प्रयोजिता । शास्त्रं श्रौतपद्धति । अधिष्ठाता प्रमुख । प्रहित प्रेषित । मातर्जीवामीति द्राविडस्त्रीस्वभावोक्ति । एव वदता कविना निज द्राविडत्व प्रकटितमित्यूह्यम् । उत्क्षिप्य उद्धृत्य । उरस्ता डन सहित सोरस्ताड यथा तथा । 'तडस्ताडनम्' इति द्विरूप । 'अत्र ह्यम्यमवय्योक्ति । आत्मन रामस्यात्यय । ( वा ) गुदेति ध्वनि । उद्र यदिति च पाठ ॥ शम्बूको नाम वृषल इति ॥ ८ ॥ वृषल शूद्र । शीर्षच्छेद्य वध्य । एन शम्बूकम् । द्विज जीवय इति कथनमहिम्ना शम्बूके

---

१ 'स रामभद्र' न २ 'शान्तम्' न, 'शान्त शान्त' घ–व ३ 'दत्त'' इति न ४ 'पुत्रमारोप्य' घ–व ५ 'प्रजानाम्' न, 'प्रजानाम्' घ–व ६ 'चरति' व घ

इत्युपश्रुत्यैवाकृष्टकृपाणपाणिः पुष्पकं विमानमारुह्य सर्वा दिशो विदिशश्च शूद्रतापसान्वेषणाय जगत्पतिः सञ्चरितुमारब्धवान्।

वासन्ती—शम्बूको नाम धूमपः शूद्रोऽस्मिन्नेव जनस्थाने तपश्चरति। तदपि नाम रामभद्रः पुनरपीदं वनमलङ्कुर्यात्।

आत्रेयी—भद्रे आगम्यतेऽधुना।

वासन्ती—आर्ये आत्रेयि एवमस्तु। कठोरीभूतस्तु दिवसः।

कण्डूलद्विपगण्डपिण्डकषणाकम्पेन सम्पातिभि-
घर्मस्रंसितबन्धनैः स्वकुसुमैरर्चन्ति गोदावरीम्।
छायापस्किरमाणविष्किरमुखव्याकृष्टकीटत्वचः
कूजत्क्लान्तकपोतकुक्कुटकुलाः कूले कुलायद्रुमाः॥ ९॥

(इति परिक्रम्य निष्क्रान्ते।)

इति शुद्धविष्कम्भकः।

हते पुनर्जीवनेन द्विजोऽपि जीविष्यति। अन्यथा न जीविष्यतीति भावस्सूच्यते ॥८॥ दिशः इन्द्रादिदिशः। विदिशः अग्न्यादिदिशः। 'दिशोर्मध्ये विदिक् स्त्रियाम्' इत्यमरः। शूद्रश्चासौ तापसश्च। तत् तस्मात्। अपि नाम इति सम्भावनाप्रसिद्धौ। रमयतीति रामः। रमु क्रीडायाम्। रामश्चासौ भद्रः मङ्गलकरः रामभद्रः। वनमलमिति ध्वनिः। गम्यत इत्यर्थे आगम्यते इति व्यवहारः सार्वलौकिकः। अनुभवसिद्धश्च। कठोरः दुस्सहः सूर्यकिरण इति यावत्। तदेवोपपादयति तथाहीति॥ कण्डूलद्विपगण्डेति॥ ९॥ कण्डूलाः कण्डूयुक्ताश्च ते द्विपाः गजाः। तेषां गण्डाः कपोलाः। त एव पिण्डाः गोलाः। तेषां कषणं घर्षणम्। तस्माद्धेतोः। आकम्पेन समन्तात्कम्पनेन। सम्पातिभिः पतनवद्भिः। घर्मेण निदाघेन। स्रंसितं सजातस्रंसनं वृन्तं येषां तानि 'स्रंसस्तु गलनं च्युतिः' इति 'वृन्तं प्रसवबन्धनम्' इति च हारावल्यमरौ। छायासु अवस्किरमाणाः मेहन्तश्च ते विष्किराः पक्षिणः। तैर्मुखेन त्रोट्या। व्याकृष्टाः विशेषेण आकृष्टाः। कीटानां त्वचः चर्माणि येषु ते। अवस्किरेति पाठे भक्षणाय भुवि विदारयन्तश्च ते विष्किरा इति योज्यम्। विदारयन्त 'विकरिते' इति महाराष्ट्राः। कूले तीरे। कुलाययुक्ता वृक्षाः। 'कुलायो नीडमस्त्रियाम्' इत्यमरः। गण्डपिण्डेति ध्वनिः। 'गलद्दानंगण्डं' इति भगवत्पादाः। 'कूलनीत इव कुङ्कुमपिण्ड' इति कुङ्कुमकविः। गण्डमण्डलकषेति च पाठः। क्षणक्षणं इति द्विरूप। छायेस्वत्र शालेत्यपि च पाठः॥ ९॥ शुद्धविष्कम्भ इति॥ आत्रेयीवनदेवतयोरुदात्तपात्रत्वात्

१ 'सञ्चारं समारब्धवान्' न. २ 'कठोरश्च' न. ३ 'कषणोत्कम्पेन' क-घ-व.

( ततः प्रविशति पुष्पकस्थः सदयोत्खातखड्गो रामः । )

रामः—हे[1] हस्त दक्षिण मृतस्य शिशोर्द्विजस्य
जीवातवे विसृज शूद्रमुनौ कृपाणम् ।
रामस्य गात्रमसि[2] निर्भर[3]गर्भखिन्न-
सीताविवासनपटोः करुणा कुतस्ते ॥ १० ॥

( कथंचित्प्रहृत्य । ) कृतं रामसदृशं कर्म । अपि जीवेत्स ब्राह्मणपुत्रः ।

(प्रविश्य) दिव्यपुरुषः—जयतु जयतु देवः ।

दत्ताभये त्वयि यमादपि दण्डधारे
सञ्जीवितः शिशुरसौ मम चेयमृद्धिः ।
शम्बूक एष शिरसा चरणौ नतस्ते
सत्सङ्गजानि निधनान्यपि तारयन्ति ॥ ११ ॥

रामः—द्वयमपि प्रियं नः । तदनुभूयतामुग्रस्य तपसः परिपाकः[4] ।

यत्रानन्दाश्च मोदाश्च यत्र पुण्याश्च[5] सम्पदः ।
वैराजा नाम ते लोकास्तैजसाः सन्तु ते शिवाः[6] ॥ १२ ॥

---

कविना प्राकृतभाषा परिहृतेति बोध्यम् ॥ सदयं यथा तथा उत्खातः कोशादाकृष्टः खड्गः येन ॥ हे हस्त दक्षिणेति ॥ १० ॥ द्विजस्य शिशोः ब्राह्मणपुत्रस्येति विवेकः । जीवातवे जीवनौषधाय ॥ ननु तपस्विनि कथं खड्गं विसृजामि इत्याशङ्क्याह—रामस्येति । गात्रं शरीरम् । 'अङ्गं च गात्रम्' इति त्रिकाण्डी । निर्भरं पूर्णम् । पटोरिति रामस्य विशेषणम् ॥ १० ॥ सदृशं योग्यं निर्दयमिति यावत् ॥ दत्ताभये त्वयीति ॥ ११ ॥ दण्डधारे शिक्षके । 'दण्डधारो महीपतिः' इति कामन्दकः । समृद्धिः दिव्या संपदित्यर्थः । एषः अहमिति शेषः । 'मरणं निधनोऽस्त्रियाम्' इत्यमरः ॥ ११ ॥ द्वयं द्विजपुनर्जीवनं तव सद्गतिश्चेत्यर्थः । तत् तस्मात् । परिपाकः फलमिति यावत् ॥ यत्रानन्दाश्चेति ॥ १२ ॥ यत्र येषु लोकेषु । यत्र द्वयया धातुभेदादानन्दमोदानामवान्तरभेद ऊह्यः । 'मनोज्ञापूतयोः पुण्यम्' इति नामनिधानम् । विराजस्य ...... तत्संबन्धिनो वैराजाः ते प्रथमाबहुवचनम् । तैजसाः तेजोमयाः । शिवाः मङ्गलकराः । ते तुभ्यम् । सन्त्विति योज्यम् । पादपूरकमिति केचित् ॥ १२ ॥ युष्मत्प्रसाद एव उपादानं

---

१ 'रे' क–घ–च. २ 'बाहु' न. ३ 'दुर्वह' क–घ–च. ४ 'फलम्' क–घ–च.
५ 'पुण्याभिसन्धयः' च–घ. ६ 'ध्रुवा.' घ–च.

शम्बूकः—युष्मत्प्रसादोपादान एवैष महिमा[1] । किमत्र तपसा । अथवा महदुपकृतं तपसा ।

> अन्वेष्टव्यो यदसि भुवने भूतनाथः शरण्यो
> मामन्विष्यन्निह वृषलकं योजनानां शतानि ।
> क्रान्त्वा प्राप्तः स इह तपसां संप्रसादोऽन्यथा चेत्
> क्वायोध्यायाः पुनरुपगमो दण्डकायां वने वः ॥ १३ ॥

रामः—किं नाम दण्डकेयम् । ( सर्वतोऽवलोक्य । ) हा कमम् ।

> स्निग्धश्यामाः क्वचिदपरतो भीषणाभोगरूक्षाः
> स्थाने स्थाने मुखरककुभो झाङ्कृतैर्निर्झराणाम् ।
> एते तीर्थाश्रमगिरिसरिद्गर्तकान्तारमिश्राः
> सन्दृश्यन्ते परिचितभुवो दण्डकारण्यभागाः ॥ १४ ॥

शम्बूकः—दण्डकैवैषा । अत्र किल पूर्वं निवसता देवेन

---

कारणं यस्य महिमासाधक इति भाव । अत्र वैराजनामलोकलाभे । महदुपकृतं महानुपकार कृत इति यावत् ॥ अन्वेष्टव्यो यदसीति ॥ १३ ॥ वृषलकं अल्पशूद्रम् । प्राप्तोऽसीति यत् इह प्राप्तो । स इति संप्रदाया- ( सम्प्रसादा ? ) नुगुण्येन पुल्लिङ्गतानिर्देश । अन्यथा चेत् एवं न चेदित्यर्थ । अयोध्याया इति पञ्चमी । निलक्षीण्लिङ्गतया दण्डकायां इत्युक्तम् । अस्मिन्वने तथा च दण्डकावने इति फलितोऽर्थ । अत एव । 'तदुपमा कुसुमान्यसिला शरा.' इति श्रीहर्षः । पुनरुपगमः पुनरागमनं त्वित्यर्थ । तस्मान्मम तप एव साधकतम इति भाव । स इहेतिकथनविलम्बसङ्कटं कवेरचातुर्यमिति संप्रदायज्ञा ॥ १३ ॥ आश्चर्यादाह—किन्नामेति ॥ स्निग्धश्यामा इति । ॥ १४ ॥ स्निग्धाः मसृणा । अपरतः अन्यत. । आभोगेन परिपूर्णतया । रूक्षाः क्षवो (?) दुष्प्रवेशा इति यावत् । झांकृतैः शब्दानुकारै. । मुखराः शब्दायमाना. ककुभः दिश· येषां येषु वा । 'तीर्थमृषिजुष्टजले गुरौ' इत्यमर । गर्ताः अवटा । 'कान्तारं वर्त्म दुर्गमम्' इत्यमर', तैः सान्द्राः निबिडा । परिचिताः अनुभूता. भुवः स्थलानि येषाम्, 'भूः क्षितौ च स्थलेऽङ्गणे' इति रभसः । भागाः प्रदेशा । कान्तारं अरण्यम् । इति केचित् । तत्र ॥ वर्ण्यमानस्य दण्डकारण्यस्य बन्धशैथिल्यापत्ते ॥ १४ ॥

---

१ 'युष्मत्प्रसादादेव' न–क, 'युष्मत्पादप्रसादोपात्त एष' घ–च. २ 'गर्भ' घ–च.

चतुर्दश सहस्राणि चतुर्दश च राक्षसाः ।
त्रयश्च दूषणखरत्रिमूर्धानो रणे हताः ॥ १५ ॥

येन सिद्धक्षेत्रेऽस्मिञ्जनस्थाने मादृशामपि जानपदानामकुतोभयः सञ्चारो जातः ।

रामः—न केवलं दण्डका जनस्थानमपि ।

शम्बूकः—बाढम् । एतानि खलु सर्वभूतरोमहर्षणान्युन्मत्तचण्डश्वापदकुलसङ्कुलगिरिगह्वराणि जनस्थानपर्यन्तदीर्घारण्यानि दक्षिणां दिशमभिवर्तन्ते । तथाहि ।

निष्कूजस्तिमिताः क्वचित्क्वचिदपि प्रोच्चण्डसत्त्वस्वनाः
स्वेच्छासुप्तगभीरभोगभुजगश्वासप्रदीप्ताग्नयः ।
सीमानः प्रदरोदरेषु विरलस्वल्पाम्भसो यास्वयं
तृष्यद्भिः प्रतिसूर्यकैरजगरस्वेदद्रवः पीयते ॥ १६ ॥

रामः—पश्यामि च जनस्थानं भूतपूर्वखरालयम् ।
प्रत्यक्षानिव वृत्तान्तान्पूर्वाननुभवामि च ॥ १७ ॥

---

चतुर्दश सहस्राणीति ॥ १५ ॥ त्रिमूर्धान इति–अत्र 'द्वित्रिभ्यां ष मूर्ध्नः' इति षप्रत्ययेन समासान्तविधेरनित्यत्वात् ॥ १५ ॥ येन राक्षसानां हननेनेत्यर्थः । जानपदानां देशवासिनाम् । न विद्यते कुतः कस्मादपि भयं यस्मिन् अकुतोभयः । दण्डकेति भिन्नं पदम् । बाढं इत्यङ्गीकारे । भूतानां प्राणिनाम् रोमहर्षणं रोमाञ्चः येभ्यो येषु वा । 'रोमाञ्चो भयहर्षयोः' इति समयपद्धतिः । 'चण्डस्त्वत्यन्तकोपनः' इत्यमरः । अभिवर्तन्ते आभिमुख्येन वर्तन्ते ॥ भङ्ग्यन्तरेणाह ॥ निष्कूजस्तिमिता इति ॥ १६ ॥ निष्कूजाः निर्गतकूजिताश्च ताः स्तिमिताः निश्चलाः । 'कूजितं कूजनं कूजः' इति द्विरूपः । भोगाः फणिकायाः श्वासैः श्वसितानिलैः । प्रकर्षेण दीप्ताः अग्नयः वनवह्नयः यासु । सीमान इति नान्तः शब्दः । 'सीमसीमे स्त्रियामुभे' इत्यमरः । अत्र बहवो भ्रमन्ति । प्रदराः श्वभ्राः । विरलानि अनिबिडानि स्वल्पाम्भांसि यासु ताः । सीमासु तृष्यद्भिः तृषावद्भिः । प्रतिसूर्यकैः । 'सरटाविशेषे प्रतिसूर्यकः' इत्यगस्त्यः । अयमसौ 'गिलिग्रः स्यादजगरः' इत्यमरः । गजावला (?) महासर्पो अजगर इति महाराष्ट्राः ॥ १६ ॥ पश्यामि च जनस्थानं इति ॥ १७ ॥ पूर्वं भूतः भूतपूर्वः । भूतपूर्वखरालयमिति जनस्थानविशेषणम् । 'निलयालयाः' इत्यमरोक्त्या निलपुल्लिङ्गत्वेऽपि

---

१ 'रक्षसां भीमकर्मणाम्' क–प–च. २ 'सिद्धिक्षेत्रे' घ. ३ 'भीरुजनानाम्' घ–व. ४ 'कुलाक्रान्तविकटगिरि०' न. ५ 'घोर' क–घ; 'घोष' व.

रामः—( सबाष्पस्तम्भम् । ) भद्र शिवास्ते पन्थानो देवयानाः। प्रतीयस्व पुण्येभ्यो लोकेभ्यः।

शम्बूकः—यावत्पुराणब्रह्मवादिनमगस्त्यमृषिमभिवाद्य शाश्वतं पदमनुप्रविशामि। ( इति निष्क्रान्तः। )

रामः—एतत्पुनर्वनमहो कथमद्य दृष्टं
यस्मिन्नभूम चिरमेव पुरा वसन्तः।
आरण्यकाश्च गृहिणश्च रताः स्वधर्मे
सांसारिकेषु च सुखेषु वयं रसज्ञाः॥ २२॥

एते त एव गिरयो विरुवन्मयूरा-
स्तान्येव मत्तहरिणानि वनस्थलानि।
आमञ्जुवञ्जुलंलतानि च तान्यमूनि
नीरन्ध्रनीरनिचुलानि सरित्तटानि॥ २३॥

---

गलहितरघ्वनग इत्यर्थ । 'अम्बूकृतं सनिष्ठीवम्' इत्यमर । 'स्त्यानमभिवृद्धौ' इति रत्नकोशः। दधति बिभ्रति । शिशिरस्सन् .कटुश्वासो कषाय इति विवेक । शिशिर शीतल । कटु मरीच्यादिरसजातीय । कषाय तुवर । सल्लकीनां गजभक्ष्यवृक्षविशेषाणाम्। विकीर्णा.। पतिताः ये ग्रन्थयः पर्वाणि। 'काण्डी'इति महाराष्ट्राः। तेषा ग्रन्थीना निष्यन्दस्य गन्धः 'समौ निर्यासौ' इति शब्दार्णवः। स्त्यायते अभिवर्धते, 'उपचीयत' इति माठरः। अत्र चतुर्थचरणे विशेषणविशेष्ययोरभिन्नपदत्वं मध्यमम्। 'व्यस्तं निशेषणं चाहु' इति न्यायात्॥ २१॥ बाष्पस्तम्भेन खेदवशात् प्रतिवाक्याभावेन सहित यथा तथा शम्बूकमाह—भद्रेति—ते तुभ्यम्। देवाना यानं सञ्चार येषु। 'तृप्ता यात पथिभिर्देवयानै' इति श्रुते। यावदनुप्रविशामि प्रवेक्ष्यामीत्यर्थ॥ एतत्पुनर्वनमिति॥ २२॥ दृष्टं अस्माभिरिति शेष। पुरा पूर्वम्। वयं वसन्तः निवसन्त अभूम स्थिता इति यावत् स्वधर्मे रताः आरण्यकाः। सांसारिकेषु सुखेषु रसज्ञा गृहिणश्चेति विशेषणे योज्ये। चद्वय पादपूरणे॥ २२॥ एते त एवेति॥ ॥ २३॥ विरुवन्तः नदन्त मयूरा येषु। आ समन्तात्। मञ्जूनि मञ्जुलानि लतानि येषु। नीरन्ध्रनीराणि निबिडजलान्येव निचुलाः विधा-

---

१ 'देवयान प्रतिपद्यस्व' क-घ-व. २ 'ब्रह्मर्षिमगस्त्यमभिवाद्य' न. ३ 'तदेव हि पुनर्वनमद्य' क-घ-व. ४ 'वञ्जुलरनानि' न. ५ 'नील' क-व-घ, 'नीप' न.

मेघमालेव यश्चायमारादिव विभाव्यते ।
गिरिः प्रस्रवणः सोऽयं यत्र गोदावरी नदी ॥ २४ ॥
अस्यैवासीन्महति शिखरे गृध्रराजस्य वास-
स्तस्याधस्ताद्वयमपि रतास्तेषु पर्णोटजेषु ।
गोदावर्याः पयसि विततश्यामलानोकहश्री-
रन्तःकूजन्मुखरशकुनो यत्र रम्यो वनान्तः ॥ २५ ॥
तदत्रैव सा पञ्चवटी यत्र चिरनिवासेन विविधविस्रम्भातिप्रसङ्गसाक्षिणः प्रदेशाः प्रियाया प्रियसखी च वासन्ती नाम वनदेवता । किमिदमापतितमद्य रामस्य । संप्रति हि ।
चिराद्वेगारम्भी प्रसृत इव तीव्रो विषरसः
कुतश्चित्संवेगात्प्रचल इव शल्यस्य शकलः ।

नसाधनानि येषाम् । 'मन्द्रस्तु गम्भीरे' इति, 'मञ्जु मञ्जुल' इति, 'तिरश्चां वाशितं रुतं' इति, 'निचुल प्रच्छदपटः' इति चामरः ॥ २३ ॥ मेघमालेवेति ॥ २४ ॥ 'माला स्यात्पङ्क्तिमाल्ययोः' इति, 'आराद्दूरसमीपयोः' इति मेदिन्यमरौ । आरादिवेत्यत्र इवशब्दो वाक्यालङ्कारे । इहेति च पाठः । अत्र गुणैरन्वये तुर्यं पादं प्रथमं योज्यः । तेन चकारस्य सार्थक्यम् । प्रथमपादे अयमिति शब्दो व्यर्थः ॥ न च वाच्यं योऽयं वायौ वाति सति इत्यादिन्यायशास्त्रवाक्यवदुपपत्तिरिति ॥ सत्यम्, तत्र सगुणत्वादित्येवोक्तं । प्रकृते यथाकथंचित् प्रथमतृतीयचरणान्तोक्तयोरयमितिशब्दयोरन्यतरोऽनागतस्तनारयते इति दिक् ॥ २४ ॥ अस्यैवासीन्महतीति ॥२५॥ अस्य प्रस्रवणगिरेः । तस्य शिखरस्य । 'अधोऽधस्तादि'ति द्विरुपः । वयमिति सीतालक्ष्मणसमेता इति भावः । रताः स्थिता इति यावत् । तेषु प्रसिद्धेषु लक्ष्मणबद्धेषु वा । यत्र उटजेषु सन्स्थिति शेषः । वितता विस्तृता श्यामला च अनोकहश्रीः वृक्षशोभा यस्मिन् । 'श्रीर्वेषरचना शोभा सपत्सरलशासिषु । वाणीलक्ष्मीत्वक्षेषु विषचित्ते च' इति विश्वः । मधुरशकुन इति विश्वः । मधुरशकुन इति सुपाठः । मुखरेति कश्चित् । तन्न, पौनरुक्त्यापत्तेः । वनान्तः । वनस्यान्तः उद्देश आमीदित्यनुषङ्गः । 'अन्तोप्रनिधनोद्देशावसानेषु' इति पदार्थमाला । श्रीरन्त इति ध्वनिः ॥ वासन्तिकेति–आत्रेय्या सह संवादं या कृतवती सैवेति बोध्यम् । किमापतितमिति । अत्र प्रियसखी वर्तते कुतो वर्तते कुतो वयं समागता इति, अस्यावर्तनेन सम्प्रत्यलाकं किं फलमिति वा भावः । तदित्यत्र तावतेति च पाठः । मद्य रामस्येति ध्वनिः ॥ चिराद्वेगा-

१ 'आरादपि' क-घ-च. २ 'प्रतिवसति' इत्यधिकं घ-च-पुस्तकयो. ३ 'चिरोद्वेगा॰' घ-ध.

व्रणो रूढग्रन्थिः स्फुटित इव हृन्मर्मणि पुनः
घनीभूतः शोको विकलयति मां नूतन इव ॥ २६ ॥

तथापि तान्पूर्वसुहृदो भूमिभागान्पश्यामि । ( निरूप्य । ) अहो अनव-
स्थितो भूतसंनिवेशः । तथाहि ।

पुरा यत्र स्रोतः पुलिनमधुना तत्र सरितां
विपर्यासं यातो घनविरलभावः क्षितिरुहाम् ।
बहोर्दृष्टं कालादपरमिव मन्ये वनमिदं
निवेशः शैलानां तदिदमिति बुद्धिं द्रढयति ॥ २७ ॥

हन्त परिहरन्तमपि मामित पञ्चवटीस्नेहो बलादाकर्षतीव ( सकरुणम् )

यस्यां ते दिवसास्तया सह मया नीता यथा स्वे गृहे
यत्सम्बन्धिकथाभिरेव सततं दीर्घाभिरास्थीयत ।
एकः संप्रति नाशितप्रियतमस्तामद्य रामः कथं
पापः पञ्चवटीं विलोकयतु वा गच्छत्वसम्भाव्य वा ॥२८॥

---

रम्मीति ॥ २६ ॥ चिरात् बहुकालानन्तरम् । वेगः कौटिल्यम् । प्रसृतः व्याप्तः । कुतश्चित् कस्मादपि संवेगात् सम्भ्रमात् । अङ्गसन्धिबन्धचला-दिति यावत् । प्रचलः चपलः । शल्यस्य बाणादिमुखवर्तिनः अयोग्य (प्र[२]) स्येत्यर्थः । 'शल्यं शङ्कु' इत्यमरः । शकलः खण्डः । 'अनुकरोति' ([१]) महाराष्ट्रः । रूढः आनुकूल्याय सजातः ग्रन्थिः यस्मिन् स व्रणः स्फु-टितः विदीर्णः । हृन्मर्मणीति बाधातिशयद्योतनायोक्तम् । 'भूतं प्राप्ते च जाते च' इति शब्दमाला । विदलयति शकलयति विफलयतीति च चत्वारः पाठाः ॥ २६ ॥ पूर्वसुहृद इति भूमिभागानां विशेषणम् । इदं द्वितीयाबहु-वचनम् । पुरातनमित्राणीत्यर्थः । निरूप्य विभाव्य । भूतानां सन्निवेशः अवस्थानम् । 'भूतं क्ष्मादौ' इत्यजयः । सरितां प्रदेश इति शेषः ॥ पुरा यत्र स्रोत इति ॥ २७ ॥ विपर्यासं वैपरीत्यम् । घनविरलभावः सान्द्र-पेलवत्वम् । 'पेलवं विरलम्' इत्यमरः । क्षितिरुहां वृक्षाणाम् । अपरं इतरत् । वनमिदं । तदिदं अवस्थानमिति शेषः । अर्थाच्छैलानामित्यनुषङ्गः । तथा च पुरा ये स्थिता त एवैते शैला इति बुद्धिं द्रढयति दृढीकरोती-त्यर्थः ॥ २७ ॥ सकरुणमिति 'करुणस्तु रसे वृक्षे कारुण्येऽपि च' इति विश्वः ॥ यस्यां ते दिवसा इति ॥ २८ ॥ यस्यामिति यच्छब्देन

---

१ 'पुराभूत' न. २ 'मूर्च्छयति च' क–घ. ३ 'तथाविधानपि' न. ४ 'भूमि' क–घ–च. ५ 'पञ्चवटीस्नेहात्' न. ६ 'पुन' घ. ७ 'सम्बन्ध' न. ८ 'तामेव' न.

शम्बूकः—जयतु जयतु देवः। देव भगवानगस्त्यो मत्तः श्रुतभवत्संनिधानस्त्वामाह—'परिकल्पितविमानावतरणमङ्गला[1] प्रतीक्षते वत्सला लोपामुद्रा सर्वे च महर्षयः। तदेहि सम्भावयास्मान्। अथ प्रजविना पुष्पकेण स्वदेशमुपगम्याश्वमेधाय सज्जो भविष्यसि' इति।



रामः—यथाज्ञापयति भगवान्।

शम्बूकः—इतस्तर्हि देव प्रवर्तयतु पुष्पकम्।

रामः—(पुष्पकं प्रवर्तयन्) भगवति पञ्चवटि गुरुजनोपरोधात्क्षणं क्षम्यतामयमतिक्रमो रामस्य।

शम्बूकः—देव पश्य पश्य।



गुञ्जत्कुञ्जकुटीरकौशिकघटाघूत्कारवत्कीचक-
स्तम्बाडम्बरमूकमौकुलिकुलः क्रौञ्चावतोऽयं गिरिः।
एतस्मिन्प्रचलाकिनां प्रचलतामुद्वेजिताः कूजितै-
रुद्वेल्लन्ति पुराणरोहिणतरुस्कन्धेषु कुम्भीनसाः॥ २९॥

अपि च।

---

पञ्चवटी दृश्यते। ते सुतमया इति भावः। नाशिता खलेति यावत्। साम्प्रतं उज्झितेति कुत्र. पाठः। यस्याः ते इति ध्वनिः॥ २८॥ मत्तः पश्यनी, ध्वनिश्च। लोपामुद्रा अगस्त्यस्य पत्नी। अथ आनन्तर्ये। प्रवर्तयन् अभिमुखीकुर्वन् इति यावत्॥ गुञ्जत्कुञ्जकुटीरेति॥ २९॥ गुञ्जन्तः कुञ्जकुटीरे ये कौशिकाः घूकाः तेषां घटाः समूहाः तेषां घूत्कारः घूत्करणम्। तद्वन्तः ये कीचकाः वंशाः। तेषां स्तम्बाः गुल्माः। तेषु आडम्बराः गर्वरहिताः। अत एव मूकाश्च ते मौकुलाः काकाः। तेषां कुलं सङ्घः यस्मिन्। प्रचलाकिनां मयूराणाम्। कूजितैः केकाभिः उद्वेल्लन्ति कम्पन्ते। तेषां भुजङ्गभक्षकत्वादिति भावः। पुराणाः पुरातनाश्च ते रोहिणतरवः चन्दनवृक्षाः। कुम्भीनसाः सर्पा इत्यर्थः। कुञ्ज एव कुटीरं पर्णशाला। प्रकृते नीडमिति द्रष्टव्योऽर्थः। 'करिणां घटना घटा' इत्यमरः। प्रकृते औपचारिकः प्रयोगः। घूत्कारः शब्दानुकारः। 'डम्बरो रचितगर्वो' इति कपिलः। 'हेरम्बमम्बुरुहडम्बर' इति बलभद्रात्मजभोजचम्पौ॥ आडम्बरेति क्वचित्। तेन। मूकपदविरोधात्॥ एतस्मिन्निति॥ एतस्मिन्निति सन्धिसङ्कटं कवेरचातुर्यम्। प्रचलाकिनां इति पाठे न बाधकम्। 'प्रचलाकिकलापिनौ' इति त्रिका-

---

१ 'परिकल्पितावतरण' न. २ 'वागस्त्यागमनाः' व–घ. ३ 'गुरुजनादेशोप' न. ४ 'कूजत्' क. ५ 'क्रौञ्चाभिधोऽयं' न.

एते ते कुहरेषु गद्गदनदद्गोदावरीवारयो
मेघालम्बितमौलिनीलशिखराः क्षोणीभृतो दक्षिणाः।
अन्योन्यप्रतिघातसङ्कुलचलत्कल्लोलकोलाहलै-
रुत्तालास्त इमे गभीरपयसः पुण्याः सरित्सङ्गमाः ॥३०॥

( निष्क्रान्तौ । )

पञ्चवटीप्रवेशो नाम द्वितीयोऽङ्कः ।

---

ण्डुशेषः । उद्वेजिताः उद्वेगं प्रापिता. इत्यर्थ ॥ २९ ॥ अपि चेति ॥ एते ते कुहरेष्विति ॥ ३० ॥ ते प्रसिद्धाः कुहरेषु गुहाबिलेषु । गद्गदं यथा तथा नदन्ति गोदावरीवारीणि येषाम् । मेघैः आलम्बिताः मौलयः शिखराधोभागा येषाम् अत एव ते च ते नीलशिखराः । 'दाक्षिणात्ये च दक्षिण' इति शब्दकोशः । अन्योन्यं परस्परम् । प्रतिघातैः प्रहारैः । संकुलं सकीर्णं यथा तथा चलन्तः गच्छन्तश्च ते कल्लोलाः महातरङ्गाः तेषा कलकलै । 'उत्तालमुखरौ समौ' इति वैजयन्ती । गभीराणि पयांसि येषु । 'पुण्यः पूतमनोज्ञयो' इति विक्रमार्कः । सरित्सङ्गमाः नदीसङ्गमा.। गद्गदमिति शब्दानुकार । 'सकीर्णं सङ्कुले' इति, 'निम्नं गभीरं गम्भीरम्' इति चामर । अत्र पूर्वतनवर्णनादस्य वनस्य महारण्यत्वं सूचितम् ॥ 'सरितो यत्र शैलाश्च तन्महारण्यमुच्यते ।' इति लीलाशुकोक्तेरिलमतिविस्तरेण ॥३०॥
इति महाराजपद + उत्तररामचरितसचीवनाख्यटिप्पणे द्वितीयोऽङ्क समाप्त ॥

॥ इति द्वितीयोऽङ्क ॥

---

१ 'मेघालङ्कृत' घ. २ 'दाक्षिणा.' क–न. + प्रथमाङ्कटीकासमाप्तौ टीकाकारेण यदात्मवृत्त कथित तत्सर्वमत्राप्यनुसन्धातव्यम्.

## ॥ तृतीयोऽङ्कः ॥

( ततः प्रविशति नदीद्वयम् । )

तमसा—सखि मुरले किमसि संभ्रान्तेव ।

मुरला—सखि तमसे प्रेषितास्मि भगवतोऽगस्त्यस्य पत्न्या लोपामुद्रया सरिद्वरां गोदावरीमभिधातुम् । जानास्येव यथा वधूपरित्यागात्प्रभृति

> अनिर्भिन्नो गभीरत्वादन्तर्गूढघनव्यथः ।
> पुटपाकप्रतीकाशो रामस्य करुणो रसः ॥ १ ॥

तेन च तथाविधेष्टजनकष्टविनिपातजन्मना प्रकृष्टतां[2] गतेन दीर्घशोकसन्तानेन[3] संप्रत्यनितरां परिक्षीणो रामभद्रः । तमवलोक्य कम्पितमिव सबन्धनं[4] मे हृदयम् । अधुना च प्रतिनिवर्तमानेन रामभद्रेण नियतमेव पञ्चवटीवने वधूसहवासविस्रम्भसाक्षिणः प्रदेशा द्रष्टव्याः । तेषु च निसर्गधीरस्याप्येवंविधायामवस्थायामतिगम्भीराभोगशोकक्षोभसंवेगात्पदे पदे महान्ति प्रमा[5]दस्थानानि शङ्कनीयानि रामभद्रस्य । तद्भगवति गोदावरि तत्र त्वया सावधानया भवितव्यम् ।

> वीचीवातैः शीकरक्षोदशीतै-
> राकर्षद्भिः पद्मकिञ्जल्कगन्धान् ।
> मोहे मोहे रामभद्रस्य जीवं
> स्वैरं स्वैरं [6]प्रेरितैस्तर्पयेति ॥ २ ॥

---

अथ तृतीयोऽङ्कः ॥ अथ वरप्रसादात्प्रच्छन्नसीताकरस्पर्शसुखं रामस्य वर्णयिष्यन् नदीद्वयसंलापेन विष्कम्भकमनुगृह्णाति—तत इति ॥ अनिर्भिन्नो गभीरत्वादिति ॥ १ ॥ अनिर्भिन्नः अप्रकाशः । गुरुः गुर्वी । पुटपाकस्य प्रतीकाशः उपमा यस्य । करुणः खेदनः इत्यर्थः ॥ १ ॥ इष्टजनः सीता । 'विनिपातः विनियोगे च' इति रत्नकोशः । प्रकृष्टतां आधिक्यम् । सन्तानेन विस्तारेण । बन्धनेन सहितं सबन्धनम् । 'बन्धनं ग्रन्थौ' इति संसारावर्तः । 'उरसि गाठ' इति महाराष्ट्राः । तेन दर्शनेनेत्यर्थः । आभोगः परिपूर्णता । तत्रभवत्या पूज्यायाः ॥ वीचीवातैरिति ॥ २ ॥

---

१ 'अनिर्भिन्नगभीरत्वाद्' ब–ध. २ 'प्रकर्षंगतेन' क–ध–व; 'प्रकर्षगमनेन' न. ३ 'सन्तापेन' क–ध. ४ एतन्नास्ति क–ध–व–पुस्तकेषु, 'कुसुमबन्धन' न. ५ 'महाप्रमादानि शोकस्थानानि' न. ६ 'प्रेषितैः' क–ध–व.

तमसा—उचितमेव दाक्षिण्य स्नेहस्य । सञ्जीवनोपायस्तु मौलिक एव रामभद्रस्यात्र संनिहित ।

मुरला—कथमिव ।

तमसा—श्रूयताम् । पुरा किल वाल्मीकितपोवनोपकण्ठात्परित्यज्य निवृत्ते लक्ष्मणे सीतादेवी प्राप्तप्रसववेदनमतिदुःखसंवेगादात्मानं गङ्गाप्रवाहे निक्षिप्तवती । तदैव तत्र दारकद्वय प्रसूता । भगवतीभ्यां पृथ्वीभागीरथीभ्यामभ्युपपन्ना रसातलं च नीता । स्तन्यत्यागात्परेण च दारकद्वयं तस्य प्राचेतसस्य महर्षेर्गङ्गादेवी स्वयमर्पितवती ।

मुरला—( सविस्मयम् । )

> ईदृशानां विपाकोऽपि जायते परमाद्भुत ।
> यत्रोपकरणीभावमायात्येवंविधो जन. ॥ ३ ॥

तमसा—इदानीं तु शम्बूकवृत्तान्तेनानेन सम्भावितजनस्थानागमनं रामभद्रं सरयूमुखादुपश्रुत्य भगवती भागीरथी यदेव भगवत्या लोपामुद्रया स्नेहादाशङ्कितं तदेवाशङ्क्य सीतासमेता केनचिदिव गृहाचारव्यपदेशेन गोदावरीं विलोकयितुमागता ।

मुरला—सुचिन्तितं भगवत्या भागीरथ्या । राजधानीस्थितस्यास्य खलु तैस्तैर्जगतामाभ्युदयिकैः कार्यैर्व्यापृतस्य रामभद्रस्य नियताश्चित्तविक्षेपा । अव्यग्रस्य पुनरस्य शोकमात्रद्वितीयस्य पञ्चवटीप्रवेशो महाननर्थ इति । तत्कथमिदानीं सीतादेव्या रामभद्र आश्वासनीय स्यात् ।

तमसा—उक्तमत्र भगवत्या भागीरथ्या 'वत्से देवयजनसम्भवे सीते अद्य खल्वायुष्मतो कुशलवयोर्द्वादशस्य जन्मवत्सरस्य संख्यामङ्गलग्रन्थि-

---

गन्धान् परिमलान् । प्रेरिते त . पवनैरित्यर्थ ॥ २ ॥ मूलसम्बन्धी मौलिक । मूल सीतेति यावत् । 'मूल पत्नीनिदानयो ' इति हैम । अस्तीति वाक्यखण्ड । अभ्युपपन्ना अनुगृहीता ॥ ईदृशानां विपाक इति ॥ ३ ॥ ईदृशानां सीताप्रमुखजनानाम् । विपाक परिणाम 'जन्तुषु कर्मणा विपाक' इति हनुमन्नाटके । उपकरणीभावं साधनत्वम् । एवंविध. ईदृश । गङ्गापृथिवीप्रमुख इति यावत् ॥ ३ ॥ यत्तदो प्रमादस्थानमर्थ इति बोध्यम् ॥ अपदेश व्याज । आभ्युदयिकै अभ्युदयकारकै । सङ्ख्या

---

१ 'मूलत एव' न २ 'अस्ति खलु' न ३ 'तस्य' न ४ 'गङ्गादेव्या समर्पित स्वयम्' न ५ 'शम्बूकवधवृत्तान्तेन' घ ६ '°जनस्थान' न, '°स्थानगमन' घ, ७ 'द्वादशजन्मसंवत्सरस्य' घ, 'द्वादशसंवत्सरस्य' व.

रमिवर्तते[1]। तदात्मनः पुराणश्वशुरमेतावतो मानवस्य राजर्षिवंशस्य प्रसवितारं सवितारमपहतपाप्मानं देवं स्वहस्तावचितैः पुष्पैरुपतिष्ठस्व । न च त्वामवनिपृष्ठचारिणीमस्मत्प्रभावाद्वनदेवता अपि द्रक्ष्यन्ति किं पुनर्मर्त्याः' इति । अहमप्याज्ञापिता 'तमसे त्वयि प्रकृष्टप्रेमैव वधूर्जानकी । अतस्त्वमेवास्याः प्रत्यनन्तरीभव[2]' इति । साहमधुना यथादिष्टमनुतिष्ठामि ।

मुरला—अहमप्येतं वृत्तान्तं भगवत्यै लोपामुद्रायै निवेदयामि । रामभद्रोऽप्यागत एवेति तर्कयामि ।

तमसा—तदियं गोदावरीहृदाग्निष्क्रम्य

परिपाण्डुदुर्बलकपोलसुन्दरं
दधती विलोलकबरीकमाननम् ।
करुणस्य मूर्तिरथवा[3] शरीरिणी
विरहव्यथेव वनमेति जानकी ॥ ४ ॥

मुरला—इयं हि सा

किसलयमिव मुग्धं बन्धनाद्विप्रलूनं
हृदयकुसुमशोषी दारुणो दीर्घशोकः ।
ग्लपयति परिपाण्डु क्षाममस्याः शरीरं
शरदिज इव घर्मः केतकीगर्भपत्रम् ॥ ५ ॥

( इति परिक्रम्य निष्क्रान्ते । )

शुद्धविष्कम्भकः ।

( नेपथ्ये । ) प्रमादः प्रमादः ।

---

मङ्गलं द्वादशी अब्दपूर्तिः । 'ग्रन्थिरुत्सवपर्वणोः' इति नानार्थमञ्जरी । अत एव 'वयसा द्वादशाब्दकौ' इति सप्तमाङ्के गर्भनाटकमन्दर्शने रामं प्रति लक्ष्मणेन वक्ष्यते । तत् तस्मात् । पुराणं पुरातनथासौ...मानव्यस्य मानवसमूहस्य । 'मानवानां तु मानव्यम्' इत्यमरः । प्रसवितारं जनकम् । उपतिष्ठस्व सेवस्व । प्रेति ध्वनि । मर्त्याः रामादय इति भाव । अत एवाग्रे–' तमसे ओसरह्म दाव' इति सभयं सीतया वक्ष्यते । प्रत्यनन्तरीभव सहाया भवेत्यर्थः ॥ परिपाण्डुदुर्बलेति ॥ ४ ॥ कबरी केशपाश ॥ ४ ॥ किसलयमिवेति ॥ ५ ॥ किसलयमिव स्थितमिति शेषः । शरीरविशेषणमेतत् । बन्धनात् वृन्तात् । दीर्घशोकः अव्यस्तं पदं मध्यमम् ।

---

१ 'अभिवर्तते' ब. २ 'प्रलम्बतीभव' ब. ३ 'मूर्तिरिव वा' ब.

( ततः प्रविशति पुष्पावचयव्यग्रा सकरुणौत्सुक्यमाकर्णयन्ती सीता । )

**सीता**—अम्महे जाणामि पिअसही मे वासन्दी वाहरदि । अहो जानामि प्रियसखी मे वासन्ती व्याहरति ।

( पुनर्नेपथ्ये । ) सीतादेव्या स्वकरकलितैः सल्लकीपल्लवाग्रै-
रग्रे लोलः करिकलभको यः पुरा पोषितोऽभूत् ।

**सीता**—किं तस्स । किं तस्य ।

( पुनर्नेपथ्ये । ) वध्वा सार्धं पयसि विहरन्सोऽयमन्येन दर्पा-
दुद्दामेन द्विरदपतिना सन्निपत्याभियुक्तः ॥ ६ ॥

**सीता**—( ससंभ्रमम् । कतिचित्पदानि गत्वा । ) अज्जउत्त परित्ताहि परित्ताहि मह त पुत्तअम् । ( स्मृतिमभिनीय सवैक्लव्यम् । ) हद्धी हद्धी । ताइ जेव्व चिरपरीचिदाइ अक्खराईं पञ्चवडीदंसणेण मं मन्दभाइणिं अणुबन्धन्ति । हा अज्जउत्त । ( मूर्च्छति । ) आर्यपुत्र परित्रायस्व परित्रायस्व मम त पुत्रकम् । हा धिक् हा धिक् । तान्येव चिरपरिचितान्यक्षराणि पञ्चवटीदर्शनेन मां मन्दभागिनीमनुबध्नन्ति । हा आर्यपुत्र ।

प्रविश्य **तमसा**—वत्से समाश्वसिहि । समाश्वसिहि ।

( नेपथ्ये ) विमानराज अत्रैव स्थीयताम् ।

---

**क्षामं** कृशम् ॥ ५ ॥ इति **शुद्धविष्कम्भः** ॥ **औत्सुक्यं** उत्कण्ठा । अह्मो जानामि प्रियसखी वासन्ती व्याहरतीति । व्याहरति क्रन्दतीत्यर्थ ॥ **सीतादेव्या.** **स्वकरेति** ॥ ६ ॥ **कलितैः** दत्तै । **सल्लकी** गजभक्ष्यतरु । 'लोलः सारः' इति **कपिल.** । तस्मात् **किं तस्य** । **वध्वा** निजकरिण्या । **सार्धं** सह । 'चण्ड उद्दाम उद्धत' इति **शब्दार्णव.** । 'उद्दामस्य क्ले' इति **गोवर्धन.** । **अभियुक्त.** अभिगृहीत । 'अभियोगस्त्वभिग्रह' इत्यमर ॥ ॥ ६ ॥ आर्यपुत्र परित्रायस्व परित्रायस्व मम पुत्रकम् । हा धिक् हा धिक् तान्येव चिरपरिचितान्यक्षराणि पञ्चवटीदर्शनेन मा मन्दभागिनीमनुबध्नन्ति । हा आर्यपुत्र । 'पुत्रक कृत्रिमे पुत्रे' इति **संसारावर्तः** । अक्खराइ इति कालिदासादिवत् कवे प्रमाद । 'अक्ष्यादिषु छ' इति गणे पठितत्वात् । 'दीने च मन्दभाग' इति **त्रिकाण्डशेष** । **तमसेति**—अत्र पात्रासूचनं कवे प्रमाद इति केचित्, तद्भ्रसापह्न्यायानुकरणम् । 'उत्साहखेदतोपादौ पात्रासूचन' इति **जयदेवोक्ते** ॥ अह्महे जलभरभरितमेघमन्थरस्तनितगम्भीरमांसलः कुतो नु भारतीनिर्घोष प्रविशन् कर्णविवरं मामपि मन्दभागिनीमु-

---

१ 'पोषित.' ब-घ. २ 'अणुरुन्धन्ति' ( अनुरुन्धन्ति ) प.

सीता—भअवदि किं भणासि अपरिप्फुडेत्ति । सरसंजोएण पच्चभिजा-णामि अज्जउत्तेण एव्व एदं वाहरिदम् । भगवति किं भणसि अपरिस्फुटेति । स्वरसंयोगेन प्रत्यभिजानामि आर्यपुत्रेणैव एतद् व्याहृतम् ।

तमसा—श्रूयते तापसस्य किल शूद्रस्य दण्डधारणार्थमैक्ष्वाको राजा जनस्थानमागत इति ।

सीता—दिट्ठिआ अपरिहीणधम्मो क्खु सो राआ । दिष्ट्या अपरिहीन-धर्मः खलु स राजा ।

नेपथ्ये । यत्र द्रुमा अपि मृगा अपि बन्धवो मे
यानि प्रियासहचरश्चिरमध्यवात्सम् ।

---

स्तनयति । 'मन्द्रस्तु गम्भीरे' इत्यमरकोशः । भरन्तो इति देशीयः शब्दः । 'भरतो' इति महाराष्ट्राः । सलिलतास्वनेति—अनभावितसीतावचनश्रवणा-दिति भावः ॥ अपरिस्फुटनिस्वाने इति ॥ ७ ॥ निस्वाने ध्वनौ । 'कुवोनवकुवस्तौ' इति शाश्वतः । स्तनयित्नौ मेघे । चकिता च उत्कण्ठि-ता च चलित् कर्मणीति क्रियाविशेषणस्य धर्मिपरत्वेऽपि न दोषः । अत एव 'अकुलनेक्षितं जनै' इति माघः ॥ ७ ॥ भगवति किं भणसि अपरिस्फुटेति । स्वरसंयोगेन प्रत्यभिजानामि आर्यपुत्रेणैव एतद्व्याहृतम् । 'दिक्षणे दण्डधारणम्' इत्यमरमाला । दिष्ट्या अपरिहीनधर्मः खल्वेष राजा । यच्छन्दद्वयेन तदानि लभ्यन्ते ॥ यत्र द्रुमा अपीति ॥ ८ ॥ अधीति—अधिवाच्य शकार्यंमि-

---

१ 'उम्माविदि' (उन्मादयति) ख-घ, 'उम्मादेदि' क. २ 'किमन्यस्मिन्निजदे' ख, 'किमन्यस्मिंऽपि निजदे' घ, '°निकाणे' न-क. ३ 'सर वा सरसंजोएण पच्चभिजाणिद अज्जउत्तो जेव्व वाहरदि' (यथा पुनः स्वरसंयोगेन प्रत्यभिज्ञान आर्य-पुत्र एव व्याहरति) क-घ-च. ४ 'दण्डकारण्यम्' न. ५ '°रामधम्मो' क-घ-न

एतानि तानि बहुनिर्झरकन्दराणि
गोदावरीपरिसरस्य गिरेस्तटानि ॥ ८ ॥

सीता—( दृष्ट्वा ) दिट्ठिआ कहं पहादचन्दमण्डलावाण्डुरपरिक्खामदुब्बलेन आआरेण अअं णिअसोम्मगम्भीराणुभावमेत्तपच्चहिजाणिज्जो अज्जउत्तो जेव्व। भअवदि तमसे धारेहि मं। दिष्ट्या कथं प्रभातचन्द्रमण्डलापाण्डुरपरिक्षामदुर्बलेनाकारेणायं निजसौम्यगम्भीरानुभावमात्रप्रत्यभिज्ञातव्य आर्यपुत्र एव। भगवति तमसे धारय माम्। ( इति तमसामाश्लिष्य मूर्च्छति। )

तमसा—वत्से समाश्वसिहि समाश्वसिहि।

( नेपथ्ये। )

अनेन पञ्चवटीदर्शनेन

अन्तर्लीनस्य दुःखाग्नेरद्योद्दामं ज्वलिष्यतः।
उत्पीड इव धूमस्य मोहः प्रागावृणोति माम् ॥ ९ ॥

हा प्रिये जानकि।

तमसा—( स्वगतम्। ) इदं तदाशङ्कितं गुरुजनेन।

सीता—( समाश्वस्य। ) हा कहं एदं। हा कथमेतत्।

( पुनर्नेपथ्ये। )

हा देवि दण्डकारण्यवासप्रियसखि विदेहराजपुत्रि।

सीता—हद्धी हद्धी। मं मन्दभाइणिं वाहरिअ आमीलंतणेत्तणीलुप्पलो मुच्छिदो जेव्व। हा कहं धरणिवट्ठे णिरुद्धणिस्सासणीसहं णिपडदो।

स्वर्थः। तान्येतानीत्यन्वय। गोदावरीं परित सरति व्याप्नोति **गोदावरीपरिसरः**। **तटानीति** प्रमाद 'तटो भृगु' इत्यमरसिंहेनाभिधानात्। अत एव। 'तीरे तटोऽस्त्री पुंस्येव भृगौ' इति **शब्दमाला**। दिष्ट्या कथं प्रभातचन्द्रमण्डलपरिक्षाम धूसरेणाकारेणायं निजसौम्यगम्भीरानुभावमानप्रत्यभिज्ञातव्य आर्यपुत्र एव। भगवति तमसे धारय माम् ॥ **आकारेण** आकृत्या उपलक्षित। 'स्वके नित्ये निजम्' इत्यमर। **अनुभावः** प्रभाव ॥ **अन्तर्लीनस्य दु खाग्नेरिति** ॥ ९ ॥ **उद्दामं** उद्भट यथा तथा। **धूमस्योत्पीडः**। 'कलिकाङ्कुरयो' इति **मकुटः**। 'अज्ञानभ्रममूर्छादौ मोह' इति **कपिलः**। **प्राक्** आदौ ॥ ९ ॥ **गुरुजनेन** लोपामुद्रयेति पूर्वोक्तमूह्यम्। विदेहेति ध्वनि। हा धिक् हा धिक्। मा मन्दभागिनीं व्याहृत्य मीलन्नेत्रनीलोत्पलो मूर्छित एव। हा कथं धरणीपृष्ठे निरुद्धनिस्सहनिश्वास पतित.। 'समौ निस्सहदुस्सहौ' इति **त्रिकाण्डशेष.**। विप्रलब्ध इति पाठे वञ्चित

१ 'अद्योद्दाम' घ. २ 'तावत्' न. ३ 'जनेनापि' ब–घ.

भअवदि तमसे परित्ताएहि परित्ताएहि । जीवावेहि अज्जउत्तं । हा धिक् हा धिक् । मा मन्दभागिनी॰ व्याहृत्यानीलनेत्रनीलोत्पलो मूर्छित एव । हा कथं धरणिपृष्ठे निरुद्धनि श्वासनि सहं निस्पंस्य॰ । भगवति तमसे परित्रायस्व परित्रायस्व । जीवयार्यपुत्रम् । ( इति पादयो॰ पतति । )

तमसा—त्वमेव ननु कल्याणि सञ्जीवय जगत्पतिम् ।
प्रियस्पर्शो हि पाणिस्ते तत्रैष निरतो जनः ॥ १०[1] ॥

सीता—जं होदु तं होदु । जहा भअवदी आणवेदि । यद्भवतु तद्भवतु । यथा भगवत्याज्ञापयति । ( इति ससंभ्रमं निष्क्रान्ता । )

( तत प्रविशति भूम्या निपतित सालया सीतया स्पृश्यमान॰ साह्लादोच्छ्वासो रामः । )

सीता—( किंचित्सहर्षम् । ) जाने उण पच्चाअदं विअ जीविअं तेल्लो-अस्स । जाने पुन प्रत्यागतमिव जीवितं त्रैलोक्यस्य[2] ।

रामः—हन्त भोः किमेतत् ।

आश्च्योतनं[3] नु हरिचन्दनपल्लवानां
निष्पीडितेन्दुकरकन्दलजो नु सेकः ।
आतप्तजीवितपुन॰परितर्पणोऽयं[4]
सञ्जीवनौषधिरसो नु हृदि प्रसिक्तः ॥ ११ ॥

---

इत्यर्थ । जीवितेनेति शेष । भगवति तमसे परित्रायस्व जीवयार्यपुत्रम् ॥ त्वमेव ननु कल्याणीति ॥ १० ॥ जगत्पतिपदमहिम्ना त्वं लक्ष्मीरिति भावो व्यज्यते । तथा च रामायणे—'सीता लक्ष्मीर्भवान्विष्णु ' इति । ते यस्य यत्र यस्यां सर्वोत्सर्थं । एष जनः राम ॥ १० ॥ यद्भवति तद्भवतु । यथा भगवती आज्ञापयति । जाने पुन प्रत्यागतमिव जीवितं त्रैलोक्यस्य । एतेन रामस्य त्रैलोक्यस्य च एकार्थवर्णनादद्वैतमेव प्रामाणिकमिति कविना सिद्धान्त-मार्गो दर्शित इति बोध्यम् । अत एव 'हरिरेव जगज्जगदेव हरि॰' इति, 'सर्वं विष्णुमयं जगत्' इति, 'भूतानि विष्णुर्भुवनानि विष्णु ' इति प्राह । भो इति मन प्रति संबोधनम् ॥ अथ स्पर्शं द्वाभ्या विशिनष्टि ॥ आश्च्योतनं नु इति ॥ ११ ॥ 'रसाविर्भूतये यस्मादङ्गुलीभि प्रपीडनम् । तदाश्च्योतनमाश्चोत-श्चोतनं' इति च द्विरूपः । आ समन्तात् श्च्योतनं गलनं वा । अत एव 'श्च्योतद्भिर्नयनाम्बुभि ' इति अलङ्काराख्यातभारतचम्पौ । नु किम् । 'पुंसि वा हरिचन्दनम्' इत्यमर॰ । करकन्दलः किरणसमष्टि॰ । 'कन्दे गोटे समष्टौ

---

१ 'तत्रैव निरतो भव ' व; 'तत्रैव नियतो भरः' घ. २ 'त्रैलोक्यनाथस्य' वं-घ. ३ 'प्रश्च्योतन' घ–व. ४ 'जीवितत्तरोः परि–' व–घ.

अपि च ।

स्पर्श॰ पुरा परिचितो नियतं स एव
सञ्जीवनश्च मनसः परितोषणश्च ।
सन्तापजां सपदि यः परिहृत्य मूर्च्छा-
मानन्दनेन जडतां पुनरातनोति ॥ १२ ॥

**सीता**—( ससाध्वसोत्कम्पमपसृत्य । ) एत्तिअ जेव्व दाणिं मे बहुदर । एतावदेवेदानीं मे बहुतरम् ।

**रामः**—( उपविश्य । ) न खलु वत्सलया सीतादेव्याभ्युपपन्नोऽस्मि ।

**सीता**—हद्धी हद्धी । किं त्ति म अज्जउत्तो मग्गिस्सदि । हा धिक् हा धिक् । किमिति मामार्यपुत्रो मार्गिष्यते ।

**राम.**—भवतु । पश्यामि ।

**सीता**—भअवदि तमसे ओसरह्म दाव । म पेक्खिअ अणब्भणुण्णादेण संणिहाणेण राआ अहिअं कुप्पिस्सदि । भगवति तमसे अपसरावस्तावत् । मां प्रेक्ष्यानभ्यनुज्ञातेन संनिधानेन राजाधिक कोपिष्यति ।

**तमसा**—अयि वत्से भागीरथीप्रसादाद्वनदेवतानामप्यदृश्यासि संवृत्ता।

**सीता**—हुम्, अत्थि एद । हुम्, अस्त्येतत् ।

---

च कन्दल ' इति **संसारावर्तः** । आ समन्तात् तप्तं च तत् जीवितं । **पुनः परि** परित तर्पयतीति **तर्पण** इत्यर्थ । 'तर्पण प्रीणनावने' इत्यमर । प्रकर्षेण सिक्त प्रशब्द पादपूरणे इति केचित् । 'स्मो नु माया नु' इत्यसङ्ख्यातशाकुन्तलश्लोकानुकाराणामिव एतत्पद्यानुकारयो पुनरुक्ति क्षन्तव्या ॥ ॥ ११ ॥ **स्पर्श पुरा परिचित इति** ॥ १२ ॥ **नियतं** नियमप्राप्त यथा तथा । सम्यक् जीवयतीति **सञ्जीवन.** । स स्पर्श । **आनन्दनेन** आनन्द प्रापणेन सभाजनेन वा । जडता शीतलता स्तब्धता वा ॥ १२ ॥ एतावदे वेदानीं मे बहुतरं **एतावज्जीवनमिति** भाव । बहुतरं सुखमिति शेप । 'व त्मलस्तु प्रसन्न ' इति **हारावली** । **अभ्युपपन्न** अनुगृहीत ॥ हा धिक् हा धिक् कथमार्यपुत्रो मा निर्दिशति । भगवति तमसे अपसरावस्तावत् । मा प्रेक्ष्य अनभ्यनुज्ञातसंनिधाना राजा कोपिष्यति । **वनदेवतानामपीति**- किमुत अन्यजनानामिति भाव । हु अस्त्येतत् । हुमित्याकर्णनाभिनय । 'रामो नाम बभूव हु' इति **लीलाशुक.** । **ससाध्वसगद्गदमिति** कथन

---

१ '°मोहनश्च' इति क–घ, '°मोहणश्च' इति च.

रामः—हा प्रिये जानकि ।

सीता—( ससाध्वंसगद्गदम् । ) अज्जउत्त असरिसं क्खु एदं इमस्स वुत्तन्तस्स । ( सास्रम् । ) अहवा किं त्ति वज्जमई जम्मन्तरेसु वि पुणो असंभाविददुल्लहदंसणस्स मं जेव्व मन्दभाइणिं उद्दिसिअ वच्छलस्स एव्वंवादिणो अज्जउत्तस्स उवरि णिरणुक्कोसा भविस्सं । अहं एदस्स हिअअं जाणामि ममावि एसो । आर्यपुत्र असदृशं खल्वेतदस्य वृत्तान्तस्य । अथवा किमिति वज्रमयी जन्मान्तरेष्वपि पुनरसम्भावितदुर्लभदर्शनस्य मामेव मन्दभागिनीमुद्दिश्य वत्सलस्यैवंवादिन आर्यपुत्रस्योपरि निरनुक्रोशा भविष्यामि । अहमेतस्य हृदयं जानामि ममाप्येषः ।

रामः—( सर्वतोऽवलोक्य सनिर्वेदम् । ) हा न किंचिदत्र ।

सीता—भअवदि तमसे तहा णिक्कारणपरिच्चाइणो वि एदस्स एव्वंवि-

---

रामेणाहं स्मर्यामीति भ्रान्त्येति बोध्यम् । 'गद्गदं स्खलिताक्षरम्' इति **अमरमाला** । आर्यपुत्र आर्यपुत्र असदृशं खल्वेतस्य वृत्तान्तस्य । 'वृत्तान्तस्तु प्रयोगे च व्यवहारे च' इति **पद्ममाला** । तथा **वृत्तान्तस्य** प्रिये जानकि प्रयोगस्य व्यवहारस्य वा । **एतत्** निरूपणं अभिनयं वेति शेषः । **असदृशं** अनुचितं खल्वित्यर्थः ॥ अथ स्वमानसं प्रत्याह—अहवेति । अथवा किमिति वज्रमयी जन्मान्तरेषु पुनरसंभावितातुलाग्रलब्धदर्शनस्य मा मन्दभागिनीमुद्दिश्यैवंवत्सलस्यैवंवादिन आर्यपुत्रस्योपरि निरनुक्रोशा भविष्यामि । अहमेवैतस्य हृदयं जानामि । एतेषामपि मम । **वज्रमयी** अतिकठोरेति यावत् । **जन्मान्तरेषु** आगामिजन्मसु । पुनस्संभावितं तुलाग्रलब्धस्येव घट्यादिशिखरशलाकाया इव । अवधानविशेषलभ्यं दर्शनं यस्य । 'तुला घटा' इति, 'शिखराचलयोरग्रं' इति, 'लब्धं प्राप्ते तुलान्तास्थशलाकायां च' इति **मेदिनीहैमकेदाराः** । मन्दं च तत् भागः भाग्यसमूहः सोऽस्या अस्तीति **मन्दभागिनी** । तदिदं कोकप्रोत्सारिमुरारिप्रयोगवद्दूषणीयम् । एवमतिशयेन वत्सलस्य प्रसन्नस्य । एवं प्रिये जानकि इत्यादिप्रेमपुरस्सरमिति यावत् । **निरनुक्रोशा** निर्दया । ममेति हृदयं जानातीत्यर्थः । अत्र षष्ठ्यर्थे बहवः प्राकृतरस्रोप्रहतुकामसुधागर्वखर्वतृतीयवाच्यायन्ते इति दिक् ॥ भगवति तदा निष्कारणपरित्यागिनोऽपि नामैतस्य एवंविधेन दर्शनेन कीदृशी मे हृदयावस्था । 'नाम प्रसिद्धौ खेदादौ' इति जयः । **एवंविधेन** निष्फलेनेत्यर्थः । अवस्थां

---

१ 'समनु-' क-घ-घ. २ 'एतद्वचनन्' क-घ-व. ३ 'जन्मान्तरे समावित' व.

धेण दंसणेण केरिसी' मे हिअआवत्था। भगवति तमसे तथा निष्कारणपरित्यागिनोऽप्येतस्यैवंविधेन दर्शनेन कीदृशी मे हृदयावस्था।

**तमसा**—जानामि वत्से जानामि।

> तटस्थं नैराश्यादपि च कलुषं विप्रियवशा-
> द्वियोगे दीर्घेऽस्मिञ्झटिति घटनात्स्तम्भितमिव।
> प्रसन्नं सौजन्याद्दयितकरुणैर्गाढकरुणं
> द्रवीभूतं प्रेम्णा तव हृदयमस्मिन्क्षण इव ॥ १३ ॥

**रामः**—देवि

> प्रसाद इव मूर्तस्ते स्पर्शः स्नेहार्द्रशीतलः।
> अद्याप्यानन्दयति मां त्वं पुनः क्वासि नन्दिनी ॥ १४ ॥

**सीता**—एदे क्खु ते अगाधमाणसदंसिदसिणेहसंभारा आणन्दणिस्सन्दिणो सुहामआ अज्जउत्तस्स उल्लावा। जाणं पच्चएण णिक्कारणपरिच्चाअसल्लिदोवि बहुमदो मह जम्मलाहो। (एते खलु तेऽगाधमानसदर्शितस्नेहसम्भारा आनन्दनिष्यन्दिनः सुधामया आर्यपुत्रस्योल्लापाः। येषां प्रत्ययेन निष्कारणपरित्यागशल्यितोऽपि बहुमतो मम जन्मलाभः।)

---

वर्णयति ॥ **तटस्थं नैराश्यादिति** ॥ १३ ॥ **नैराश्यात्** निराशत्वात्। **तटस्थं** उदासीनम्। **विप्रियं** परित्यागः। तद्वशात्। **कलुषं** आविलम्। **झटिति** सहसा। **घटनात्** निष्फलसम्बन्धादपि। **स्तम्भितं** संजातस्तम्भम्। 'स्तम्भो जडीभावे' इति नन्ददधि (?) तस्य रामस्य। करुणरसे। **गाढकरुणं** भृशदयम्। **क्षणे** कालविशेषे। द्रवीभूतमिव। हृदयं एक सदपि परित्यागानानावस्थं वर्तत इति भावः ॥ १३ ॥ **प्रसाद इव मूर्त इति** ॥ १४ ॥ **मूर्तः** मूर्तिमान्। **स्नेहार्द्रं**स्त्वत्र सन्धिसङ्कटं घटनात् स्तम्भित इव क्षन्तव्यम्। **आनन्दयति** तोषयति। **नन्दिनी**ति कवेश्चातुर्यम्। तथापि नन्दयतीति धातुबलादवान्तरभेदः ऊह्यः। **नन्दिनी** प्रथमैकवचनम्। नन्दिनी त्वं पुनः क्वासि इत्यर्थः। पुनश्शब्दो वाक्यालङ्कारे। नन्दिनि इति सम्बोधनं इति केचित्। तन्न। देवीति सम्बोधनस्यैव प्राबल्यात् ॥ १४ ॥ एते खलु ते अगाधमानसदर्शितस्नेहसम्भवा आनन्दनिष्यन्दिनः सुधामया आर्यपुत्रस्यालापाः। येषां प्रत्ययेन निष्कारणपरित्यागश-

---

१ 'कीदिसो विअ मे हिअआणुबन्धोत्ति ण आणामि' (कीदृश इव मे हृदयानुबन्ध इति न जानामि) क-ख-घ. २ 'घटनोत्तम्भितमिव' ख-घ. ३ 'अद्याप्येऽ, वार्द्रयति' ख-घ. ४ 'नन्दिनि' क-घ-न-ख. ५ 'अगाधदसिद' क-घ-ख.

रामः—अथवा कुतः प्रियतमा । नूनं सङ्कल्पाभ्यासपाटवोपादान एष रामभद्रस्य भ्रमः ।

( नेपथ्ये ) अहो महान्प्रमादः प्रमादः । ( 'सीतादेव्याः स्वकरकलितैः' इत्यर्धं पठ्यते । )

रामः—( सकरुणौत्सुक्यम् । ) किं तस्य ।

( पुनर्नेपथ्ये । 'वध्वा सार्धं' इत्युत्तरार्धं पठ्यते । )

सीता—को दाणिं अहिउञ्जिस्सदि । क इदानीमभियोक्ष्यते ।

रामः—क्वासौ क्वासौ दुरात्मा यः प्रियायाः पुत्रकं वधूद्वितीयमभिभवति । ( इत्युत्तिष्ठति । )

प्रविश्य सम्भ्रान्ता । वासन्ती—कथं देवो रघुनन्दनः ।

सीता—कहं पिअसही मे वासन्ती । कथं प्रियसखी मे वासन्ती ।

वासन्ती—जयतु जयतु देवः ।

रामः—( निरूप्य । ) कथं देव्याः प्रियसखी वासन्ती ।

वासन्ती—देव त्वर्यतां त्वर्यताम् । इतो जटायुर्शिखरस्य दक्षिणेन सीतातीर्थेन गोदावरीमवतीर्य सम्भावयतु देव्याः पुत्रकं देवः ।

सीता—हा ताद जडाओ सुण्णं तुए विणा इदं जणट्ठाणम् । हा तात जटायो शून्यं त्वया विनेदं जनस्थानम् ।

रामः—अहह हृदयमर्मच्छिदः खल्वमी कथोद्घाताः ।

वासन्ती—इत इतो देवः ।

---

त्यनोऽपि बहुमतो जन्मलाभः । सम्भवः उत्पत्तिः शल्यतः शल्यादपि । तथा च ईदृशशल्यनिवारणाय शरीरपातोऽस्तु, एतादृशप्रियंवदनाद्योपभोगाय पुनर्जन्मलाभोऽस्त्विवति सीताया भाव इति बोध्यम् ॥ सङ्कल्पस्यावभासे भासने यत् पाटवं सामर्थ्यं तदेव उपादानं साधकतमं यस्य, 'करणं साधकतमोपादाने' इति विक्रमार्कः । उपादानमिति ध्वनिः । विभ्रमः सीतासम्बन्धरूपो विलास इत्यर्थः ॥ 'प्रमादोऽनवधानता' इत्यमरः । क इदानीमभिभविष्यति । कथं प्रियसखी मे वासन्ती । जटायुरित्युदन्तोऽपि शब्दः 'जटायुस्तु जटायुवत्' इति लिङ्गनिर्णयः । हा तात जटायो शून्यं त्वया जनस्थानम् । मर्म विध्यन्ति मर्माविधः । 'उपोद्घात उदाहारः' इति,

---

१ 'पटुत्वोत्पादित.' घ; 'पाटवोत्पादः' ब. २ 'अभिजुञ्जइ' (अभियुज्यते) न. ३ 'देव त्वर्यतां त्वर्यताम्' इति न. ४ 'जटायुशिखरदक्षिणेन' ब; 'जटायुगिरि°' घ.

**सीता**—भअवदि सच्चं जेव्व वणदेवदा वि म न पेक्खन्दि । भगवति सत्यमेव वनदेवता अपि मा न प्रेक्षन्ते ।

**तमसा**—अयि वत्से सर्वदेवताभ्य. प्रकृष्टतममैश्वर्यं मन्दाकिनीदेव्याः क्तिमित्याशङ्कसे ।

**सीता**—तदो अणुसरम्ह । ततोऽनुसराव । ( इति परिक्रामति । )

**राम.**—भगवति गोदावरि नमस्ते ।

**वासन्ती**—( निरूप्य । ) देव मोदस्व विजयिना वधूद्वितीयेन देव्याः पुत्रकेण ।

**रामः**—विजयतामायुष्मान् ।

**सीता**—अम्महे ईदिसो मे पुत्तओ संवुत्तो । अहो ईदृशो मे पुत्रकः संवृत्त ।

**रामः**—हा देवि दिष्ट्या वर्धसे ।

> येनोद्गच्छद्बिसकिसलयस्निग्धदन्ताङ्कुरेण
> व्याकृष्टस्ते सुतनु लवलीपल्लवः कर्णमूलात्[१] ।
> सोऽयं पुनस्तव मदमुचां वारणानां विजेता
> यत्कल्याणं वयसि तरुणे भाजनं तस्य जात. ॥ १५ ॥

**सीता**—अविउत्तो दाणिं अअं दीहाऊ इमाए सोम्मदंसणाए होदु । अवियुक्त इदानीमय दीर्घायुरनया सौम्यदर्शनया भवतु ।

**रामः**—सखि वासन्ति पश्य पश्य कान्तानुवृत्तिचातुर्यमपि शिक्षित वत्सेन ।

---

उद्घात इति पाठे 'उद्घात आरम्भ' इति चामर ॥ भगवति सर्वथा वनदेवता अपि मा न द्रक्ष्यन्ति । ऐश्वर्यं वनदेवतामाहात्म्यमिति यावत् । मन्दाकिन्याः भागीरथ्या 'गङ्गा मन्दाकिनी भागीरथी च वियदापगा' इति रत्नमाला । ततोऽनुसराव । अहो ईदृशो मे पुत्रकस्संवृत्त ॥ **येनोद्गच्छदिति** ॥ १५ ॥ **उद्गच्छत्** उदयच्च तत् **बिसं** मृणाल तदेव **किसलयम्**, तद्वत् **स्निग्धो** मसृण दन्ताङ्कुरः यस्य । किसलयमिति पद बहिर्माधुर्यमानसूचकम् । **लवली** 'राय आवळी' इति **महाराष्ट्रा** । **कर्णमूलात्** श्रवसोरादिभागात् । ध्वनिश्च । **तस्य** कल्याणस्य करिण्यनुवर्तनादिरूपस्य इत्यर्थ ॥ १५ ॥ अयि पुन इदानीं दीर्घायुरनया सौम्यदर्शनया करिण्या सह भवतु । अयीति वासन्तीं प्रति संबोधनम् । **वत्सेन** करि-

१ 'कर्णपूरात्' ग-घ.

लीलोत्खातमृणालकाण्डकवलच्छेदेषु सम्पादिताः
पुष्यत्पुष्करवासितस्य पयसो गण्डूषसंक्रान्तयः ।
सेकः शीकरिणा करेण विहितः कामं विरामे पुन-
र्यत्स्नेहादनरालनालनलिनीपत्रातपत्रं धृतम् ॥ १६ ॥

सीता—भअवदि तमसे अयं दाव ईरिसो जादो । दे उण ण आणामि कुसलवा एत्तिएण कालेण केरिसा संवुत्तेत्ति । भगवति तमसे अयं तावदीदृशो जातः । तौ पुनर्न जानामि कुशलवावेतावता कालेन कीदृशौ संवृत्ताविति ।

तमसा—यादृशोऽयं तादृशौ तावपि ।

सीता—ईरिसी अहं मन्दभाइणी जाए ण केवलं णिस्सहो अज्जउत्त-विरहो पुत्तविरहो वि । ईदृश्यहं मन्दभागिनी यस्या न केवलं निःसह आर्य-पुत्रविरहः पुत्रविरहोऽपि ।

तमसा—भवितव्यतेयमीदृशी ।

सीता—किंवा मए पसूदाए जेण तारिसंपि मह पुत्तआणं ईसिविरल-कोमलधवलदसणुज्जलकवोलं अणुबद्धमुद्धकाअलीविहसिदं णिबद्धकाअसि-हण्डअं अमलमुहपुण्डरीअजुअलं ण परिचुम्बिअं अज्जउत्तेण । किं वा मया प्रसूतया येन तादृशमपि मम पुत्रकयोरीषद्विरलकोमलधवलदशनोज्ज्वलक-पोलमनुबद्धमुग्धकाकलीविहसितं निबद्धकाकशिखण्डकममलमुखपुण्डरीकयुगलं न परिचुम्बितमार्यपुत्रेण ।

---

पुत्रकेण ॥ लीलोत्खातमृणालेति ॥ १६ ॥ यत् यस्मात्कारणात् । छेदेषु भङ्गेषु । कवलार्थंस्वदानविभागेषु इति यावत् । 'छेदो विभजने भक्त-व्ययतो' इति मकुटः । पुष्यच्च तत् पुष्करे हस्ताग्रे वासितं सञ्जात-वासम् । कामं यथेप्सितम् । विरामे विश्रान्तिविषये 'विश्रान्तौ च विरामे' इति नन्दी । अनरालं अवक्रम् ॥ १६ ॥ भगवति तमसे अयं तावदीदृशो जातः । तौ पुनर्न जानामि एतावता कालेन कीदृशौ संवृत्ताविति । ईदृश्यस्मि मन्दाकिनि (मन्दभागिनी ?) यस्या न केवलं निःसह आर्यपुत्रविरह, पुत्रविरहश्च । किं वा मया प्रसूतया यस्या मम पुत्रयोस्तादृशमीषद्विरलकुड्मलितधवल-दशनोद्भिन्नितलोचननमनुबद्धमुग्धकाकलीहसितनिर्मोज्ज्वलं मुखपुण्डरीकं न चु-म्बितमार्यपुत्रेण । विरलं यथा तथा कुड्मलिते प्रसादसूचको धवलशब्दः । 'प्रसादे तु धवलता' इति समयपद्धतिः । काकलीयुक्तविहसितमिति विवेकः । 'काकली तु कले सूक्ष्मे ध्वनौ' इत्यमरः । 'मुखस्य दर्पणाब्जेन्दुपु-

---

१ 'सम्पादिता' घ. २ 'लीलातपत्रम्' घ. ३ 'दशनकुड्मलोज्ज्वल' (दश-नकुड्मलोज्ज्वल) न.

तमसा—अस्तु देवताप्रसादात् ।

सीता—भअवदि तमसे एदिणा अवच्चसंसुमरणेण उस्ससिदपण्हुदत्थणी दोण्णिं वच्चाणं पिदुणो संणिहाणेण क्खणमेत्तं संसारिणीह्मि संवुत्ता । भगवति तमसे एतेनापत्यसंस्मरणेनोच्छ्वसितप्रस्नुतस्तनी इदानीं वत्सयो पितुः संनिधानेन क्षणमात्रं संसारिण्यस्मि संवृत्ता ।

तमसा—किमत्रोच्यते । प्रसवः खलु प्रकर्षपर्यन्तः स्नेहस्य । परं चैतदन्योन्यसंश्लेषणं पित्रोः ।

अन्तःकरणतत्त्वस्य दम्पत्योः स्नेहसंश्रयात् ।
आनन्दग्रन्थिरेकोऽयमपत्यमिति बध्यते ॥ १७ ॥

वासन्ती—इतोऽपि देवः पश्यतु ।

अनुदिवसमवर्धयत् प्रिया ते
यमचिरनिर्गतमुग्धलोलबर्हम् ।
मणिमुकुट इवोच्छिखः कदम्बे
नदति स एष वधूसखः शिखण्डी ॥ १८ ॥

सीता—( सकौतुकस्नेहास्रम् ) एसो सो एसो सो । एष स एष सः ।

---

ण्डरीकादय' इति शृङ्गारमञ्जरी । अस्तु इति चुम्बितमित्यनेनानुषङ्गः । भगवति तमसे एतेनापत्यसंस्मरणेन उच्छ्वसितप्रस्नुतस्तनी इदानीं वत्सपितुस्संनिधानेन क्षणमात्रं संसारिण्यस्मि संवृत्ता । उच्छ्वसितं उद्धृतं प्रस्नुतं स्रव यथोस्तादृशौ स्तनौ यस्याः । वत्सयोः कुशलवयोः । पितुः निजभर्तुः रामस्येत्यर्थः । एतेन कविना निजं द्राविडत्वमाविष्कृतमिति बोध्यम् । खणेत्ति क्वचे प्रमादः । छणेति साधु । क्षणस्य अच्यादिगणे पठितत्वात् । प्रसवः सन्तानः । स्नेहस्य प्रेम्णः । प्रकर्षः उत्कर्षः । पर्यन्तः अवधिः यस्य । एतदिति प्रसव इत्यभिधेयं अपत्यमित्यर्थः । परं उत्कृष्टं वक्तुमशक्यमिति भावः । पित्रोः संश्लेषणं सुरतात्मकं उपगूहनमिति यावत् ॥ तदेव निशिनष्टि— ॥ अन्तःकरणतत्त्वस्येति ॥ १७ ॥ दम्पत्योः तरुणस्त्रीपुरुषयोः । अन्तःकरणमिति यत्तत्त्वं इन्द्रियं तस्य स्नेहेन प्रेम्णा सह संश्रयात् संमेलनाद्धेतोः । अयमनुभवसिद्धः । आनन्दस्य ग्रन्थिः बीजं तस्य रेकः रेचनं तदेवापत्यमित्यर्थः । तथा च दम्पत्योरन्तःकरणप्रेमपूर्वसंभोगस्खलितआनन्दरस एवापत्यमिति भावः । 'तत्त्वं तु ब्रह्मणि इन्द्रिये' इति, 'ग्रन्थिः पर्वणि बीजे च' इति, 'उत्सर्गो रेकरेचने' इति हारावलीकपिलविक्रमार्काः ॥ १७ ॥ अनुदिवसमवर्धयदिति ॥ १८ ॥ यं शिखण्डिनम् ।

---

१ 'तार्ण अ' क-व; 'तार्ण च' घ. २ 'प्रहृष्ट' च. ३ 'पठ्यते' च. ४ 'अरण्यमदताण्डवोत्सवान्तेष्वयमचिरोद्गतमुग्धलोलबर्हः.' घ-च.

रामः—मोदस्व वत्स मोदस्व ।

सीता—एव्वं होदु । एवं भवतु ।

रामः—भ्रमिषु कृतपुटान्तर्मण्डलावृत्तिचक्षुः-

प्रचलितचटुलभ्रूताण्डवैर्मण्डयन्त्या ।

करकिसलयतालैर्मुग्धया नर्त्यमानं

सुतमिव मनसा त्वां वत्सलेन स्मरामि ॥ १९ ॥

हन्त तिर्यञ्चोऽपि परिचयमनुरुध्यन्ते ।

कतिपयकुसुमोद्गमः कदम्बः

प्रियतमया परिवर्धितोऽयमासीत् ।

सीता—( निरूप्य सास्रम् । ) सुट्ठु पच्चहिआणिदं अज्जउत्तेण । सुष्ठु प्रत्यभिज्ञातमार्यपुत्रेण ।

रामः—स्मरति गिरिमयूर एष देव्याः

स्वजन इवात्र यतः प्रमोदमेति ॥ २० ॥

वासन्ती—अत्र तावदासनपरिग्रहं करोतु देवः ।

( राम उपविशति । )

वासन्ती—

नीरन्ध्रबालकदलीवनमध्यवर्ति

कान्तासखस्य शयनीयशिलातलं ते ।

अत्र स्थिता तृणमदाद्बहुशो यदेभ्यः

सीता ततो हरिणकैर्न विमुच्यते स्म ॥ २१ ॥

---

ममेति ध्वनिः । मङ्कुटेति भ्रान्त पाठः । 'अमकुट्यादिषु' इति प्राकृतव्याकरणे वररुचिशासनात् मउडेति साधुः । शिखावला कदम्बे नीपवृक्षे ॥ एष स वत्सेति मयूरं प्रति सबोधनम् ॥ भ्रमिषु कृतपुटेति ॥ १९ ॥ भ्रमिषु भ्रमणेषु । कृतपुटान्तः नेत्रकोशान्तरे यासां मण्डलानां मण्डलाकारेङ्गितानाम् । आवृत्तिः पौनःपुन्यं तादृशं यच्चक्षुः नेत्रं तेन सह प्रचलिता कम्पिता या चटुला चतुरा भ्रूः तस्याः ताण्डवैः इङ्गितरूपैः नर्तनैः करणेन । एकपदमेतत् । त्वां मण्डयन्त्या भूषयन्त्या । आवृत्तीति चक्षुरिति च पदद्वयं विशेषणविशेष्यरूपं कर्म । ताण्डवैर्मण्डयन्त्येति वार्थः ॥ अनुरुध्यन्ते अनुवर्तन्ते । ममेतिध्वनिः । सुट्ठु प्रत्यभिज्ञातमार्यपुत्रेण । देव्याः इतीदं मातुः स्मरतीतिवदुपपन्नम् ॥ कतिपयकुसुमेति ॥ २० ॥ यतः यस्मात् ॥ २० ॥ नीरन्ध्रबालेति ॥ २१ ॥ प्रथमचरणमेकपदम् । 'मृगाया

---

१ 'इतचक्षुः' घ, 'मण्डलावृत्ति चक्षु.' घ. २ 'य आसीत्' ग–घ. ३ 'पल्लवेव कदली०' क–ध–व. ४ 'वनगोचरेभ्यः' न–टी

रामः—इदं तावदशक्यमेव द्रष्टुम् । ( इत्यन्यतो रुदन्नुपविशति । )

सीता—सहि वासन्दि किं तुए किदं अज्जउत्तस्स मह अ एदं दंसअन्तीए । हद्धी हद्धी । सो जेव्व अज्जउत्तो तं जेव्व पञ्चवडीवणं सा जेव्व पिअसही वासन्दी दे जेव्व विविहविस्सम्भसक्खिणो गोदावरीकाणणुद्देसा दे जेव्व जादणिव्विसेसा मिअपक्खिपादवा सा जेव्व चाहम् । मह उण मन्दभाइणीए दीसन्तं वि सव्वं जेव्व एदं णत्थि त्ति सा ईरिसो जीवलोअस्स परिणामो संवुत्तो । सखि वासन्ति किं त्वया कृतमार्यपुत्रस्य मम चैतद्दर्शयन्त्या । हा धिक् हा धिक् । स एवार्यपुत्रस्तदेव पञ्चवटीवनं सैव प्रियसखी वासन्ती त एव विविधविस्रम्भसाक्षिणो गोदावरीकाननोद्देशास्त एव जातनिर्विशेषा मृगपक्षिपादपा सैव चाहम् । मम पुनर्मन्दभाग्याया दृश्यमानमपि सर्वमेवैतन्नास्तीति तदीदृशो जीवलोकस्य परिणामः संवृत्तः[1] ।

वासन्ती—सखि सीते कथं न पश्यसि रामभद्रस्यावस्थाम् ।

नवकुवलयस्निग्धैरङ्गैर्ददन्नयनोत्सवं
सततमपि नः स्वेच्छादृश्यो नवो नव एव यः ।
विकलकरणः पाण्डुच्छायः शुचा परिदुर्बलः
कथमपि स इत्युन्नेतव्यस्तथापि दृशोः प्रियः ॥ २२ ॥

सीता—पेक्खामि सहि पेक्खामि । प्रेक्षे सखि प्रेक्षे ।

तमसा—पश्यन्ती प्रियं भूयाः ।

सीता—हा देव्व एसो मए विणा अहं वि एदेण विणेत्ति सिविणेपि

---

वनगोचरा ' इति कपिल । ततः अनन्तरम् । हरिणकैः बालहरिणैः । न विमुच्यते स्म न विमुक्ता ॥ २१ ॥ वासन्ति किं त्वया कृतं आर्यपुत्राय ममैतद्दर्शयन्त्या । हा धिक् हा धिक्, स एवार्यपुत्र , तदेव पञ्चवटीवनम्, सैव प्रियसखी वासन्ती, त एव विविधविस्रम्भसाक्षिणो गोदावरीकाननोद्देशाः, त एव जातनिर्विशेषा मृगपक्षिण । मम पुनर्मन्दभागिन्या दृश्यमानमपि सर्वमेवैतन्नास्ति । ईदृशो जीवलोकस्य परिणामस्संवृत्त । एतत् शिलातलमित्यर्थ । जातः निर्विशेषः असमसाधारण्य येषु । निर्भया इति भाव ॥ नवकुवलय इति ॥ २२ ॥ ददत् वितरन् । ददन् इति कोऽपि बभ्राम । विकलानि अयथाभूतानि करणानि इन्द्रियाणि यस्य । परि अन्तर्बहिश्च । तथापि स्वभावादिति शेष ॥ २२ ॥ पश्यामि सखि पश्यामि । प्रियं पश्यन्ती भूया इत्यन्वय । हा दैव एष मया विना अहमपि एतेन विनेति

---

१ 'परिवत्तो' ( परिवर्तः ) क–घ–च. २ 'कुवलयदल' क–घ–च. ३ 'ददौ' घ–घ. ४ 'दे' च–घ. ५ 'नव नवमेव य.' घ–घ. ६ 'पाण्डुः सोव'— घ–घ. ७ 'पश्य प्रिय भूयः' न.

केण संभाविदं आसि । ता मुहुत्तमेत्तं जम्मन्तरादो विअ लद्धदंसणं बाहसलिलन्तरेसु पेक्खामि दाव वच्छलं अज्जउत्तम् । ( इति पश्यन्ती स्थिता । )
हा देव एष मया विना अहमप्येतेन विनेति स्वप्नेऽपि केन सम्भावितमासीत्। तन्मुहूर्तमात्रं जन्मान्तरादिव लब्धदर्शनं बाष्पसलिलान्तरेषु प्रेक्षे तावद्वत्सलमार्यपुत्रम् ।

तमसा—( परिष्वज्य सास्रम् । )

विलुलितमतिपूरैर्बाष्पमानन्दशोकं
प्रचयमवसृजन्ती पक्ष्मलोत्तानदीर्घा ।
स्नपयति हृदयेशं स्नेहनिष्यन्दिनी ते
धवलमधुरमुग्धा दुग्धकुल्येव दृष्टिः ॥ २३ ॥

वासन्ती—ददतु तरवः पुष्पैरर्घ्यं फलैश्च मधुश्च्युतः
स्फुटितकमलामोदप्रायाः प्रवान्तु वनानिलाः ।
कलमविरलं रज्यत्कण्ठाः क्वणन्तु शकुन्तयः
पुनरिदमयं देवो रामः स्वयं वनमागतः ॥ २४ ॥

रामः—एहि सखि वासन्ति मन्वितः स्थीयताम् ।

वासन्ती—(उपविश्य सास्रम् ।) महाराज अपि कुशलं कुमारलक्ष्मणस्य ।

---

स्वप्नेऽपि केन संभावितमासीत् । तत्सन्मुहूर्तमपि जन्मान्तरतोऽपि अविस्मरणीयदर्शनं बाष्पसलिलान्तरेषु पश्यामि तावद्वत्सलमार्यपुत्रम् । केन संभावितं न केनापीत्येकोऽर्थः । केन ब्रह्मणा संभावितमित्यन्योऽर्थः । 'को ब्रह्मा' इत्येकाक्षरः । सलिलानामन्तरेषु अनुत्पत्तिदशासु । 'अन्तर प्रागभावादौ' इति सत्तारावर्तः ॥ विलुलितमतिपूरैरिति ॥ २३ ॥ विलुलितं विशेषेण तरलितम् । आनन्दशोकाभ्यां दर्शनपरित्यागजन्मभ्यामित्यर्थः । पक्ष्मला पक्ष्मनिबिडा उत्ताना चासौ दीर्घा । 'निम्नं गभीरं गम्भीरमुत्तानं तद्विपर्यये' इत्यमरः । हृदयेशं रामम् । 'मधुरस्वदुलः' इति रत्नमाला । 'कुल्याल्पा कृत्रिमा सरित्' इत्यमरः ॥ २३ ॥ ददतु तरवः पुष्पैरिति ॥ २४ ॥ मधूनि च्युतानि एभ्यस्तैः फलैः । 'अर्घ्यपुष्पफलादिभिः' इति स्मृतेः । आमोदानां परिमलानां प्रायो भूमा येषु । अविरलं सान्द्रम् ।

---

१ 'अणुन्दरसंगा' घ., 'इतरद्द०' न. २ 'दृष्पोत्तान' च-घ. ३ 'द-इठ' घ-च. ४ 'रज्युतकण्ठाः' च-घ.

रामः—( अश्रुतिमभिनीय । )

करकमलवितीर्णैरम्बुनीवारशष्पै-
स्तरुशकुनिकुरङ्गान्मैथिली यानपुष्यत् ।
भवति मम विकारस्तेषु दृष्टेषु कोऽपि
द्रव इव हृदयस्य प्रस्तरोद्भेदयोग्यः ॥ २५ ॥

वासन्ती—महाराज ननु पृच्छामि अपि कुशलं कुमारलक्ष्मणस्येति ।

रामः—( आत्मगतम् । ) अये महाराजेति निष्प्रणयमामन्त्रणपदं सौमित्रिमात्रे च बाष्पस्खलिताक्षरः कुशलप्रश्नः । तथा मन्ये विदितसीतावृत्तान्तेयमिति । ( प्रकाशम् । ) आं कुशलं कुमारस्य ।

वासन्ती—( रुदती । ) अयि देव [1]किं परं दारुण खल्वसि ।

सीता—सहि वासन्दि किं तुमं एव्ववादिणी होसि । पिआरहो क्खु सव्वस्स अज्जउत्तो विसेसदो मह पिअसहीए । सखि वासन्ति किं त्वमेवंवादिनी भवसि । ~~प्रियार्हः~~ खलु सर्वस्यार्यपुत्रो विशेषतो मम प्रियसख्याः ।

वासन्ती—त्वं जीवितं त्वमसि मे हृदयं द्वितीयं
त्वं कौमुदी नयनयोरमृतं त्वमङ्गे ।
इत्यादिभिः प्रियशतैरनुरुध्य मुग्धां
तामेव शान्तमथवा किमिहोत्तरेण ॥ २६ ॥

( इति मुह्यति । )

तमसा—स्थाने वाक्यनिवृत्तिर्मोहश्च ।

---

रज्यत्कण्ठाः । कलं मधुरास्फुटं यथा तथा क्वणन्तु ॥ २४ ॥ करकमलवितीर्णैरिति ॥ २५ ॥ अम्बुभिः तरुशकुनीन् वृक्षविहङ्गान् । नीवाराः तृणधान्यानि । तेषां शष्पैः बालतृणैः कुरङ्गान् इति क्रमालङ्कारः । शष्पैरिति ध्वनिरप्यकिंचित्कर इति भावः । अत एव–'गङ्गाप्रपातान्तविरूढशष्पम्' इति ईश्वरकृष्णमिश्रः । विकारः ममता । प्रस्नवः इत्युपचारः । उद्भेदः उदयः ॥ २५ ॥ अपरमिति ध्वनिः ॥ सखि वासन्ति किमिति त्वमेववादिनी । पूजार्हः खलु सर्वस्यार्यपुत्रः, विशेषतः पुनर्मम प्रियसख्याः ॥ त्वं जीवितं त्वमसीति ॥ २६ ॥ जीवितं जीवः । द्वितीयं स्वरूपकम् । कौमुदी आनन्दयित्री । अमृतं अमरत्वसाधनम् । 'वपुष्यवयवे त्वङ्गम्' इति नन्दी । अत्र त्वङ्गारनयमधिकम् । मुग्धां मूढां च तामेव लक्षवा·

---

१ 'अनाकर्णनम्' न. २ 'प्रस्नवोद्भेद' न. ३ 'किमिति' च; 'किमिति दारुणो दारुण.' अ. ४ 'पूआरहो' ( पूजार्हः ) न. ५ 'किमतः परेण' न. ६ 'स्थाने...मोहश्च' इत्येतद्रामवाक्यमिति च–घ.

रामः—सखि समाश्वसिहि समाश्वसिहि ।

वासन्ती—( समाश्वस्य । ) तत्किमिदमकार्यमनुष्ठितं देवेन ।

सीता—सहि वासन्दि विरम विरम । [सखि वासन्ति विरम विरम ।]

रामः—लोको न मृष्यतीति ।

वासन्ती—कस्य हेतोः ।

रामः—स एव जानाति किमपि ।

तमसा—चिरादुपालम्भः ।

वासन्ती—अयि कठोर यशः किल ते प्रियं
किमयशो ननु घोरमतः परम् ।
किमभवद्विपिने हरिणीदृशः
कथय नाथ कथं बत मन्यसे ॥ २७ ॥

सीता—तुमं जेव्व सहि वासन्दि दारुणा कठोरा अ जा एव्वं अज्जउत्तं पलित्तं पदीवेसि । [त्वमेव सखि वासन्ति दारुणा कठोरा च यैवमार्यपुत्रं प्रदीप्तं प्रदीपयसि ।]

तमसा—प्रणय एवं व्याहरति शोकश्च ।

रामः—सखि किमत्र मन्तव्यम् ।

त्रस्तैकहायनकुरङ्गविलोलदृष्टे-
स्तस्याः परिस्फुरितगर्भभरालसायाः ।
ज्योत्स्नामयीव मृदुबालमृणालकल्पा
क्रव्याद्भिरङ्गलतिका नियतं विलुप्ता ॥ २८ ॥

---

नसीति भावः ॥ २६ ॥ स्थाने युक्तम् । निवृत्तिः कुण्ठनम् । चतुर्थचरणं पूरयति–शान्तमिति । गतमित्यर्थः । अतः स्यागादपि । अन्याय्यं न्यायादपेतम् । सखि वासन्ति विरम विरम । कस्य हेतोः केन हेतुनेत्यर्थः । 'विस्मृतं कस्य हेतोः' इति मुद्राराक्षसः । लज्जावशात् किमपीत्युक्तम् ॥ अयि कठोर यश इति ॥ २७ ॥ कठोर इति संबोधनम् । अतः परमिति । किं वर्तितमिति शेषः ॥ २७ ॥ त्वमेव सखि वासन्ति दारुणा कठोरा च या एवं विप्रलपन्ती पर्याप्तं विप्रलापयसि । विप्रलापवन्तं करोषीति यावत् । अप्ययुक्तं इति शेषः । आर्यपुत्रमित्यर्थः । विप्रलापो विरोधोक्तिः, पर्याप्तं यथेप्सितम् ॥ त्रस्तैकहायनेति ॥ २८ ॥ एकहायनः । एकवत्सर इत्यर्थः । तृतीयचरणेन विरहपाण्डिमा । क्रव्याद्भिः राक्षसैः । विशे-

---

१ 'वत्कस' घ–व. २ 'दचितत्तदुभ' घ–च. ३ 'पलवन्तं पलावेसि' ( प्रलपन्तं प्रलापयसि ) न. ४ 'मुग्ध' च–घ.

सीता—अज्जउत्त धरामि एसा धरामि । आर्यपुत्र ध्रिये एषा ध्रिये ।

रामः—हा प्रिये जानकि क्वासि ।

सीता—हद्धी हद्धी । अण्णो विअ अज्जउत्तो पमुक्तकण्ठं रोदिदि । हा धिक् हा धिक् । अन्य इवार्यपुत्रः प्रमुक्तकण्ठं रोदिति ।

तमसा—वत्से सांप्रतिकमेवैतत् । कर्तव्यानि खलु दुःखितैर्दुःखनिर्वापणानि ।

पूरोत्पीडे तटाकस्य परीवाहः प्रतिक्रिया ।
शोकक्षोभे च हृदयं प्रलापैरेव धार्यते ॥ २९ ॥

विशेषतो रामभद्रस्य बहुप्रकारकष्टो जीवलोकः ।

इदं विश्वं पाल्यं विधिवदभियुक्तेन मनसा
प्रियाशोको जीवं कुसुममिव घर्मो ग्लपयति ।
स्वयं कृत्वा त्यागं विलपनविनोदोऽप्यसुलभ-
स्तदद्याप्युच्छ्वासो भवति ननु लाभो हि रुदितम् ॥ ३० ॥

रामः—कष्टं भो कष्टम् ।

---

षेण दृष्टा ॥ २८ ॥ धरामि आर्यपुत्र धरामि । जीवामीत्यर्थः । 'द्वौ मासौ वहह धरामि दिने दिने' इति बोधायनरामायणे ॥ हा धिक् हा धिक् अन्य इवार्यपुत्र प्रमुक्तकण्ठ प्ररुदित । प्रकृष्टं अधिकं रुदितं अस्य । अन्य इवार्यपुत्र इति ध्वनि । सांप्रतं इदानीम् । तत्संबन्धि सांप्रतिकं योग्यमिति वाऽर्थ । 'त्रिषु सांप्रतिक योग्यं' इति विक्रमार्के । एतत् प्ररुदितम् । निर्वापणानि प्रमार्जनानि ॥ पूरोत्पीडे तटाकस्येति ॥ २९ ॥ पूरैः उत्पीडे उत्पीडने सति परीवाहः जलनिर्गम । शोकेन क्षोभे सतीत्यर्थं । 'प्रलापोऽनर्थक वच ' इत्यमर ॥ २९ ॥ बहुप्रकारं कष्टं यस्मिन् स जीवलोकः मर्त्यभुवनम् ॥ तदेवोपपादयति—इदं विश्वं पाल्यमिति ॥ ३० ॥ विश्वं जगत् । विधिवत् यथाराजधर्मम् । पाल्यं रामेणेति शेष । अभियुक्तेन अभित युक्तेन न्यायकरणात् । उचितेनेत्यर्थं । जीवं असुधारणम् । रामस्येत्यनुषङ्ग । त्यागं तव सीताया इति बोध्यम् । असुलभ इति स्वस्यैव अनर्थमूलकत्वादिति भावः । तत् तस्मात् । उच्छ्वास इति दु सातिशयत । 'श्वासो महानुच्छ्वास ' इत्यमरशेषः ॥ उच्छ्वासोऽस्तु रुदिते किं फलमत आह—नन्विति । रुदितं लाभो हि । तथा च रुदिते कृते दुःखस्य न्यूनतैव लाभो हि इति भाव ॥ ३० ॥ भो इति मन प्रति

---

१ 'निर्धारणानि' न. २ 'अवधार्यते न. ३ 'रामभद्रस्य यस्य' क ४ 'बहुतर°' क–घ–च. ५ 'क्लमयति' घ–च.

दलति हृदयं गाढोद्वेगं द्विधा तु न भिद्यते
वहति विकलः कायो मोहं न मुञ्चति चेतनाम्।
ज्वलयति तनूमन्तर्दाहः करोति न भस्मसा-
त्प्रहरति विधिर्मर्मच्छेदी न कृन्तति जीवितम् ॥ ३१ ॥

सीता—एवं ण्णेदं। एवं न्विदम्।

रामः—हे भवन्तः पौरजानपदाः।

न किल भवतां देव्याः स्थानं गृहेऽभिमतं तत-
स्तृणमिव वने शून्ये त्यक्ता न चाप्यनुशोचिता।
चिरपरिचितास्ते ते भावाः परिद्रवयन्ति मा-
मिदमशरणैरद्यास्माभिः प्रसीदत रुद्यते ॥ ३२ ॥

वासन्ती—( स्वगतम्। ) अतिगम्भीरमापूरणं मन्युसम्भारस्य। ( प्रकाशम्। ) देव अतिक्रान्ते धैर्यमवलम्ब्यताम्।

रामः—सखि किमुच्यते धैर्यमिति।

देव्या शून्यस्य जगतो द्वादशः परिवत्सरः।
प्रणष्टमिव नामापि न च रामो न जीवति ॥ ३३ ॥

---

सबोधनम् ॥ दलति हृदयमिति ॥ ३१ ॥ 'दलति स्फुटति' इति माठरः। उद्वेगः तीव्रता। विकलं अवयवभूतम्। मोहं मूर्च्छाम्। चेतनां ज्ञप्तिम्। अन्तर्दाहः अन्तःसन्तापः। तनूं भस्मसात् भस्माधीनम् न करोति। विधि- दैवम्। जीवितं जीवम्। अत्र तुशब्दः पादपूरणे ॥ ३१ ॥ एवमेतत् सत्यमिति भावः ॥ न किल भवतामिति ॥ ३२ ॥ स्थानं वास। ततः तस्मात्। नातिशोचिता किञ्चिच्छोचितेति यावत्। अपिस्संभावनायाम्। पूरणे इति केचित्। ते ते विविधाः। 'भावाः शृङ्गारजाः क्रियाः' इति वामनः। परि परितः द्रवयन्ति आर्द्रीकुर्वन्तीति यावत्। अस्माभिरिदमिति भवद्भिः श्रूयमाणं यथा तथेत्यर्थः। प्रतिदिनमिति केचित्। वस्यमाणमित्यन्ये। रुद्यते प्रसीदत रोदनाय किल भवद्भिरेवनसवादो निर्मित इति भावः ॥ ३२ ॥ मन्युसंभारस्य दैन्यसामग्र्याः। आपूरणं पूर्तिः। अतिक्रान्ते गते सर्वाल्लयर्थः। कार्ये इति शेषः ॥ देव्या शून्यस्येति ॥ ३३ ॥ 'संवत्सरो वत्सरश्च परिवत्सरः' इति द्विरूपः। नाम देव्या इति शेषः। नामास्या इति वा पाठः। रामो न जीवतीति न जीवत्येवेत्यर्थः। चकारः

---

१ 'शोकोद्वेगात्' न, 'गाढोद्वेगः' टी. २ 'तथा द्रवयन्ति' न, 'परिभ्रमयन्ति' घ. ३ 'अपाम्येव' व-घ. ४ 'अतगूढ़ शोकसागरस्य' व-घ, 'मन्युभारस्य' न. ५ 'तुत सौवेने' घ.

सीता—मोहिदह्मि एदेहिं अज्जउत्तवअणेहिं । मोहितास्म्येतैरार्यपुत्रवचनैः ।

तमसा—एवमेव वत्से ।

नैताः प्रियतमा वाचः स्नेहार्द्राः शोकदारुणाः ।
एतास्ता मधुनो धाराः श्च्योतन्ति सविषास्त्वयि ॥ ३४ ॥

रामः—अयि वासन्ति मया खलु

यथा तिरश्चीनमलातशल्यं
प्रत्युप्तमन्तः सविषश्च दंशः ।
तथैव तीव्रो हृदि शोकशङ्कु-
र्मर्माणि कृन्तन्नपि किं न सोढः ॥ ३५ ॥

सीता—एव्वं ह्मि मन्दभाइणी पुणोवि आआसआरिणी अज्जउत्तस्स
एवमस्मि मन्दभागिनी पुनरप्यायासकारिणी आर्यपुत्रस्य ।

रामः—एवमतिनिष्कंम्पस्तम्भितान्तःकरणस्यापि मम संस्तुतवैत्तप्रिय
वस्तुदर्शनादुद्दामोयमावेगः । तथाहि ।

वेलोल्लोलक्षुभितकरुणोज्जृम्भणस्तम्भनार्थं
यो यो यत्नः कथमपि मया धीयते तं तमन्तः ।
भित्त्वा भित्त्वा प्रसरति बलात्कोऽपि चेतोविकार-
स्तोयस्येवाप्रतिहतरयः सैकतं सेतुमोघः ॥ ३६ ॥

---

पूरणे । नैव इति वा पाठः ॥ ३३ ॥ मोहितैवार्यपुत्रस्य प्रियवचनैः ॥ नैताः प्रियतमा इति ॥ ३४ ॥ शोकदारुणतया नैताः प्रियतमाः । अत्र भङ्ग्यन्तरेण निदर्शनमाह–एता इति । यद्यपि मधुनो धाराः । तथापि सविषाः श्च्योतन्ति गलन्तीत्यर्थं ॥ ३४ ॥ धैर्यमवलम्बितमेव मयेत्याह–यथा तिरश्चीनमिति ॥ ३५ ॥ सविषः विषेण सहित अग्रदेशो यस्य सः । सविषाग्रदेश । तिर्यग्भवं तिरश्चीनम् । अलातशल्यं अलाताभिसबन्धलोहाग्रं यथा अन्तः आत्मनि प्रत्युप्तम् । अत्र गदिपत्वं तिरश्चीनत्वमलाताभिसबन्धश्च बाधातिशयद्योतनायोक्त इति सूक्ष्मदृष्टिभिरूह्यम् । तथैव हृदि तीव्रः तीक्ष्णः न सोढः किं सोढ एवेत्यर्थं ॥ ३५ ॥ एवमस्मि मन्दभागिनी । अहं पुन पुन. आयासकारिण्यार्यपुत्रस्य । संस्तुताः परिचिताश्च ते वर्गा वृक्षादीनां वर्गाः । 'सस्तव स्यात्परिचय' इत्यमर । 'संस्तुता नुता.' इति कोपि बभ्राम ॥ वेलोल्लोलेति ॥ ३६ ॥ हेलया लीलया ।

---

१ 'दन्त.' न. २ 'अनिगूढ' न. ३ 'संस्तुतवहुतर' घ, 'संस्तुतप्रियवस्तु०' न. ४ 'अपायमावेग' न–च. ५ 'लोलोल्लोल' क–घ–च, 'हेलोल्लोल' टी. ६ 'करुणो०' च–टी. ७ 'समाधीयते' न. ८ 'हित्वा हित्वा' न.

**सीता**—एदिणा अज्जउत्तस्स दुव्वारदारुणारम्भेण दुःखसंखोहेण परिमुसिअणिअदुक्खं किंपि पमुद्धं मे हिअअं। एतेनार्यपुत्रस्य दुर्वारदारुणारम्भेण दुःखसंक्षोभेण परिमुषितनिजदुःखं किमपि प्रमुग्धं मे हृदयम्।

**वासन्ती**—( स्वगतम्। ) कष्टमभ्यापन्नो देवः। तदन्यतः क्षिपामि तावत्। ( प्रकाशम्। ) चिरपरिचितानिदानीं जनस्थानभागानवलोकनेन मानयतु देवः।

**रामः**—एवमस्तु। ( इत्युत्थाय परिक्रामति। )

**सीता**—संदीवणं जेव्व दुक्खस्स पिअसहीए विणोदणोवाओ त्ति तक्केमि। संदीपन एव दुःखस्य प्रियसख्या विनोदनोपाय इति तर्कयामि।

**वासन्ती**—( सकरुणम्। ) देव देव

> अस्मिन्नेव लतागृहे त्वमभवस्तन्मार्गदत्तेक्षणः
> सा हंसैः कृतकौतुका चिरमभूद्गोदावरीसैकते।
> आयान्त्या परिदुर्मनायितमिव त्वां वीक्ष्य बद्धस्तया
> कातर्यादरविन्दकुड्मलनिभो मुग्धः प्रणामाञ्जलिः॥ ३७॥

**सीता**—दालुणासि वासन्ति दालुणासि। जा एदेहिं हिअअमम्मगूढसल्लसंघट्टणेहिं पुणो पुणोवि मं मन्दभाइणिं अज्जउत्तं अ संदावेसि। दारुणासि वासन्ति दारुणासि। या एतैर्हृदयमर्मगूढशल्यसंघट्टनैः पुनः पुनरपि मां मन्दभागिनीमार्यपुत्रं च संतापयसि।

---

करणानां इन्द्रियाणाम्। **प्रतिहतः** निहत **रयः** वेगः यस्य सः। तोयस्येति जातावेकवचनम्। **ओघः** प्रवाहः॥ ३६॥ आर्यपुत्रस्य एतेन दुर्वारदारुणारम्भेण दुःखसंक्षोभेण प्रमुषितनिजदुःखमपि किमपि प्रमुग्धमिव मे हृदयम्। **किमपि** अनिर्वचनीयम्। प्रकर्षेण मुग्धं मूढम्। **अभ्यासक्तः** प्राप्तुरण्ठित। कष्टमला कृच्छ्रदुद्धो भावश्च। **आभोगः** परिपूर्णता। सन्दीपनमेव दुःखस्य प्रियसख्या विनोदनोपाय इति मन्ये॥ **अस्मिन्नेव लतागृहे** इति॥ ३७॥ 'विमनायित स्वादुर्मनायित' इति नन्दी। अञ्जलिरिति कथनं कवेश्चातुर्यम्। येदयाजनक्रियमाणोऽयं विलासः न तु कुलाङ्गनानां सम्प्रदायः। कदाचिदपराधे सति सत पादपीडनमेवाचरयन्ति-

---

१ 'अन्यारत्न.' न–टी. २ 'सन्दीवणाइ' ( सन्दीपनानि ) च–घ. ३ 'पि–सी विणोद...त्ति मन्नेमि' ( प्रियसखी विनोदनोपाय इति मन्यते ) च–घ. 'मम्मुग्गाडिअसह' न ( मर्मोद्घाटितशल्य ).

राम.—अयि चण्डि जानकि इतस्ततो दृश्यसे एवं नानुकम्पसे ।

हा हा देवि स्फुटति हृदयं ध्वंसते देहबन्धः
शून्यं मन्ये जगदविरलज्वालमन्तर्ज्वलामि ।
सीदन्नन्धे तमसि विधुरो मज्जतीवान्तरात्मा
विष्वङ्मोह स्थगयति कथं मन्दभाग्य. करोमि ॥ ३८ ॥

( इति मूर्च्छति । )

सीता—हद्धी हद्धी पुणोवि पमूढो अज्जउत्तो । हा धिक् हा धिक् पुनरपि प्रमूढ आर्यपुत्र ।

वासन्ती—देव समाश्वसिहि समाश्वसिहि ।

सीता—अज्जउत्त म मन्दभाइणिं उद्दिसिअ सअलजीवलोअमङ्गलाधारस्स दे वारवार ससइदजीविअदालुणो दसापरिणामो त्ति हा हदम्हि । ( इति मूर्च्छति । ) आर्यपुत्र मा मन्दभागिनीमुद्दिश्य सकलजीवलोकमङ्गलाधारस्य ते वारवार संशयितजीवितदारुणो दशापरिणाम इति हा हतास्मि ।

तमसा—वत्से समाश्वसिहि समाश्वसिहि । पुनरस्व पाणिस्पर्श एव सञ्जीवनोपायो रामभद्रस्य ।

---

तराम्, इत्युच्चैश्शिरस । अलौकिकवैदिकघण्टापथमन्य (?) विशेषज्ञा प्रमाणम् ॥ ३७ ॥ या एतैर्हृदयमर्मगूढशल्यघट्टने पुन पुनरपि मा मन्दभागिनीमार्यपुत्राय स्मरयति ॥ हा हा देवि स्फुटतीति ॥ ३८ ॥ हाहेति वीप्सायाम् । देहशब्देनाङ्गानि लक्ष्यन्ते । तेषा बन्ध. परस्परसबन्ध । ध्वंसते ध्वस्तो भवति । अविरलज्वालं यथा तथा । 'मनस्यात्मनि चान्त स्यात्' इति रत्नमाला । तमसि भ्रमे । अन्धे गाढे सति । सीदन् क्लिश्यमान । 'विधुरो दीन' इति शब्दार्णव । आत्मा देह । 'धृतिर्देह निष्वात्मा' इति हलायुध । अन्त मनसि । अन्त पश्यामीति दीक्षिता. । मोह मूर्च्छा । विष्वक् अभित । स्थगयति कुण्ठयतीति केदार । मामिति शेष । 'किमित्यर्थेऽपि च कथ' इति शब्दमाला ॥३८॥ हा धिक् हा धिक् पुनरपि प्रमूढ आर्यपुत्र । आर्यपुत्र मा मन्दभागिनीमुद्दिश्य सकलजीवलोकमङ्गलाधारजन्मलाभस्य ते संशयितजीवितदारुणो दशापरिणाम इति हा हतास्मि । संशयितं सञ्जातसंशय जीवितं यस्मिन् दशापरिणामे । स चासौ दा-

---

१ 'दृश्यसे नानु०' न, 'दृश्यसे एव' घ २ 'अविरल' व–घ ३ 'मङ्गलजन्मलाहस्स' ( मङ्गल्यजन्मलाभस्य ) न, 'मङ्गलाधारजन्मलाभस्य' टी.

वासन्ती—कथमद्यापि नोच्छ्वसिति। हा प्रियसखि सीते क्वासि सम्भावयात्मनो जीवितेश्वरम्।

( सीता ससंभ्रममुपसृत्य हृदि ललाटे च स्पृशति। )

वासन्ती—दिष्ट्या प्रत्यापन्नचेतनो रामभद्रः।

रामः—आलिम्पन्नमृतमयैरिव प्रलेपै-
रन्तर्वा बहिरपि वा शरीरधातून्।
संस्पर्शः पुनरपि जीवयन्नकस्मा-
दानन्दादपरमिवादधाति मोहम्॥ ३९॥

( आनन्दनिमीलिताक्ष एव ) सखि वासन्ति दिष्ट्या वर्धसे।

वासन्ती—देव कथमिव।

रामः—सखि किमन्यत्। पुनः प्राप्ता जानकी।

वासन्ती—अयि देव रामभद्र क्व सा।

रामः—( स्पर्शसुखमभिनीय। ) पश्य नन्वियं पुरत एव।

वासन्ती—अयि देव किमिति मर्मच्छेददारुणैरेभिः प्रलापैः प्रियसखीदुःखदग्धामपि मां पुनर्मन्दभाग्यां दहसि।

सीता—ओसरिदुं इच्छम्मि। एसो उण चिरसंभावसोम्मसीदलेण अज्जउत्तप्फंसेण दीहदारुणं वि झत्ति संदावं हरन्तेण वज्जलेवोवणिबद्धो

---

रुणः। दशा अवस्था। जीवितेश्वरं भर्तारम्। धनिश्च। 'जीवितेशः प्रिये यमे' इत्यमरः॥ आलिम्पन्निति॥ ३९॥ आ समन्तात् प्रकृष्टाश्च ते लेपाः। वाशब्दश्चार्थः। 'इवार्थचार्थयोर्वा स्यात्' इति कपिलः। अपिरेवः वाकारश्च पुनरुक्तौ। शरीरधातूंश्चेलयं.। 'श्लेष्मादि रसरक्तादि महाभूतानि तद्गुणाः। इन्द्रियाण्यश्मविकृतिः शब्दयोनिश्च धातवः' इत्यमरः। सः पूर्वं कृतः। प्रसिद्धो वा। 'अकस्मात् सहार्थे ( सहसार्थे ? ) स्याद्' इति कपिलः। 'अकस्मात्' इति महाराष्ट्राः। आनन्दाद्धेतोः। न विद्यते परः यस्मात् अपरः तं मोहं पारवश्यम्। 'मोहो मूर्च्छापारवश्यतमोमौढ्यभ्रमादिषु' इत्यगस्त्यः। अकस्मात् अहेतुकादानन्दादिति केचित्। तन्न। स्पर्शस्यैव सुखहेतुत्वात्॥ ३९॥ इतोऽपसरणं कर्तुमिच्छामि। एष पुनर्विरम्भसभावसौम्यशीतलेन आर्यपुत्रस्पर्शेन दीर्घदारुणमपि झटिति सन्ता-

---

१ 'मसरविर तनोति' क-घ-च. २ 'चिरप्पणअसंभारसोम्म' ( चिरप्रणयसंभारसौम्य ) न; 'विरप्पायसखभाव॰' टी. ३ 'उल्लाहअन्तेण' ( उल्लाघयता ) म-टी. ४ 'लेवोवणद्धो' ( लेपोपनद्धः ) न-टी.

विअ सिज्जन्तणीसहविवरहत्थो वेअणसीलो अवमो विअ मे हत्थो । अपसर्तुमिच्छामि । एष पुन चिरसद्भावसौम्यशीतलेन आर्यपुत्रस्पर्शेन दीर्घदारुणमपि झटिति सन्ताप हरता वज्रलेपोपनिबद्ध इव स्विद्यति सदविपर्यस्तो वेपनशीलोऽवश इव मे हस्त ।

**रामः**—सखि कुतः प्रलापाः ।

> **गृहीतो यः पूर्वं परिणयविधौ कङ्कणधरः**
> **सुधासूते· पादैरमृतशिशिरैर्यः परिचितः ।**

**सीता**—अज्जउत्त सो जेव्व दाणिं सि तुमं । आर्यपुत्र स एवेदानीमसि त्वम् ।

> **रामः**—**स एवायं तस्यास्तुहिनकरौपम्यसुभगो**
> **मया लब्धः पाणिर्ललितलवलीकन्दलनिभः ॥ ४० ॥**

---

पमुल्लाघयता वज्रलेपोपनद्ध इव खिद्यत्स्वेदनिस्सहो चिरलब्धवेपिर अवसज्जितो मे हस्त. । आर्यपुत्रविषये स्पर्शेन **वज्रलेपेन उपनद्धः** बद्ध इव स्थित । वज्रलेपेति कथनमतिदार्ढ्यसूचनाय । **स्वेदः निस्सह·** दुस्सह येन । खिद्यदित्यत्र 'स्वध्या चच्छना' इति जलम् । बहुकालातिपाताद्विप्र **लब्धो** वधितश्चासौ **वेपिरः** सात्विकभावात् कम्पनशील इत्यर्थ । देशीयोऽय शब्द । **अवसज्जित·** सज्जीकृत । प्रेमवशादिति भाव । अवेत्युपसर्गो लक्षणया अवधानवाचक ॥ **गृहीतो यः पूर्वमिति** ॥ ४० ॥ धरतीति धर **कङ्कणस्य धरः** । सुधाना सूतिर्यस्मात् । चन्द्रस्य **पादैः** किरणै **अमृतं** जलम् । तद्वत् **शिशिरैः** शीते । 'शैत्य हि यत्सा प्रकृतिर्जलस्य' इति ईश्वरकृष्णमिश्र· । 'पय कीलालममृतम्' इति । 'अमृत जल' इति च अमरनन्दिनौ । **परिचितः** कृतपरिचय इत्यर्थ । एतेन पाणिस्पर्शजीवन इति व्यज्यते । आर्यपुत्र स एवेदानीमसि त्वम् । **तदितरेति**–तस्या सीताया , इतर स्पर्शकारणात्पाणेरन्य । तस्य करस्य । **औपम्येन** दृष्टान्तेन **सुभगः** मनोहर । 'स्यादौपम्य तु दृष्टान्त ' इति **शाश्वतः** । 'अनौपम्या रम्याम्' इति **भगवत्पादाः** । अत्र तस्या इति कथने उभयत्र चारितार्थ्यात् पुनस्तदितरेति कथन कवेरचातुर्यरूपक प्रमाद । 'कन्दलः कन्दगोल ' इति कपिल । **तस्याः पाणिः मया लब्ध·** अयेति

---

१ 'खिद्यत्स्वेदनि सह ' टी. २ 'चिर सेच्छास्पर्शी ' क–घ–च. ३ 'तदितरकरौपम्य' न–टी.

( इति गृह्णाति । )

**सीता**—हद्धी हद्धी । अज्जउत्तप्फंससम्मोहिदाए पमादो क्खु मे संवुत्तो । हा धिक् हा धिक् । आर्यपुत्रस्पर्शसंमोहितया प्रमादः खलु मे संवृत्तः ।

**रामः**—सखि वासन्ति आनन्दनिमीलितेन्द्रियः साध्वसेन परवानस्मि । तत् तावदेनां धारय ।

**वासन्ती**—कष्टमुन्माद एव ।

( सीता ससंभ्रमं हस्तमाक्षिप्यापसर्पति । )

**रामः**—हा धिक् प्रमादः ।

करपल्लवः स तस्याः सहसैव जडो जडात्परिभ्रष्टः ।
परिकम्पिनः प्रकम्पी करान्मम स्विद्यतः स्विद्यन् ॥ ४१ ॥

**सीता**—हद्धी हद्धी । अज्जवि अणवत्थिदघुम्मिदमुउलुप्पन्तणअणो ण पज्जवत्थावेदि अत्ताणअं । हा धिक् हा धिक् । अद्याप्यनवस्थितघूर्णितमुकुलायमाननयनो न पर्यवस्थापयत्यात्मानम् ।

**तमसा**—( सस्नेहकौतुकस्मितं निर्वर्ण्य । )

सस्वेदरोमाञ्चितकम्पिताङ्गी
　जाता प्रियस्पर्शसुखेन वत्सा ।
मरुन्नवाम्भःप्रविधूतसिक्ता
　कदम्बयष्टिः स्फुटकोरकेव ॥ ४२ ॥

---

शेन ॥ ४० ॥ हा धिक् आर्यपुत्रस्पर्शसंमोहितया प्रमादः संवृत्तः । 'खेदो ह्यमदकम्पादि साध्वसं नयनमीलनम् । तत्याकल्वं तथानन्दस्फूर्तिरुन्मादना क्रिया ॥' इति काव्यदीपिकायाम् । उन्मादश्चित्तविभ्रमः । करोति ॥ ४१ ॥ जडः शिशिरः ॥ ४१ ॥ हा धिक् अनवस्थिततिमितघूर्णमानम् विरलवेदनं न पर्यवस्थापयत्यात्मानम् । स्तिमितः निश्चलः । निर्वर्ण्य दृष्ट्वा ॥ सस्वेदरोमाञ्चितेति ॥ ४२ ॥ मरुता पवनेन प्रविधूता नवाम्भसा सिक्तेति क्रमः । व्यर्थोऽपि प्रशब्दः पादपूरकः । कदम्बयष्टिः नीपशाखा । 'विचकार कोरकाणि' इति माघप्रयोगात् स्फुटानि कोरकाणि यस्या इति केचित् । तन्न, यथा जलधरपटल इत्यादिवत् कोरकाणीत्यसाधु कोरका पाठ-स्यनाचेव साधु । अत एव 'कोरकः पुमान्' इति, 'समूहे पत्न न ना' इति च विविधव्याख्यानटिलनामलिङ्गानुशासनो भागवतपादानुग्रहानुकृतिरमर-सिंहोऽभणीत् ॥ ४२ ॥ अद्यापि अवश्यं स्तेनानेनाऽनेन स्नापितासि ।

**सीता**—(स्वगतम्।) अम्महे अयसेन एदेण अत्ताणएण लज्जाविदम्हि भअवदीए तमसाए। किं त्ति किल एसा मण्णिस्सदि एसो परिच्चाओ एसो अहिसङ्गो त्ति। अहह अयशसैतेनात्मना लज्जापितास्मि भगवत्या तमसया। किमिति किलैषा मंस्यत एष परित्याग एषोऽभिषङ्ग इति।

**रामः**—(सर्वतोऽवलोक्य।) हा कथं नास्त्येव। नन्वकरुणे वैदेहि।

**सीता**—सच्चं अकरुणम्हि जा एव्वविहं तुमं पेक्खन्ती जीवेमि जेव्व। सत्यमकरुणास्मि यैवंविधं त्वां प्रेक्षमाणा जीवाम्येव।

**रामः**—क्वासि देवि प्रसीद। न मामेवंविधं परित्यक्तुमर्हसि।

**सीता**—अयि अज्जउत्त विप्पदीवं विअ एदं। अयि आर्यपुत्र विप्रतीपमिवैतत्।

**वासन्ती**—देव प्रसीद प्रसीद। स्वेनैव लोकोत्तरेण धैर्येण संस्तम्भयातिभूमिं गतमात्मानम्। कुतोऽत्र मे प्रियसखी।

**रामः**—व्यक्तं नास्त्येव कथमन्यथा वासन्त्यपि तां न पश्येत्। अपि खलु स्वप्न एष स्यात्। न चास्मि सुप्तः। कुतो रामस्य निद्रा। सर्वथा स एवैष भगवाननेकवारपरिकल्पनानिर्मितो विप्रलम्भः पुनः पुनरनुबध्नाति माम्।

---

किमेषा ज्ञास्यति। एष परिवाद एषोऽभिषङ्ग इति। अहहेति खेदादिषु। अवशं पाराधीन्यम्। **लज्जापिता** लज्जां प्रापिता। एष मम सेत्यर्थः। मुणिस्सदीत्यत्र 'ज्ञो मुण' इति मुणादेशः। **परिवादः** अपवादः। 'अभिषङ्गः अभिनिवेश' इति **धरणिः**। अकरुणतरास्मि या एवंविधमपि त्वां पश्यन्ती जीवाम्येव। पश्यन्त्येव जीवामीति च चमत्कारः॥ अयि आर्यपुत्र विप्रतीपमिवैतत्। **एतत्** प्रेमेति शेषः। विशेषेण प्रतीपं प्रतिकूलम्। तथा च परित्यागे कृते एव पुनः प्रेमानुसरणमनुचितमिति भावः। **अतिभूमिं** मर्यादापरपारमिति यावत्। **प्रियसखी** सीता। **अन्यथा** सा यदि स्यात् **कथं न पश्येदिति** योज्यम्। **सर्वथा** प्रकारेण। **अनेकवारं** असकृत् **परिकल्पनानि** सङ्कल्पविकल्पादीनि यस्मिन् सः। 'विप्रलम्भस्तु वञ्चना' इति **नामार्णवः**। विप्रलम्भस्य **भगवानिति** विशेषणं माहात्म्यापादकम्। अत एव 'भगवति निद्रे दयस्व' इति **भट्टाचार्याः**। विप्रलम्भः शृङ्गारविशेष इति केचित्। विप्रयोग इत्यन्ये। उभे अपि शशशृङ्गे॥ 'मए एव्वं विप्पलद्धो' इत्युत्तरवाक्यविरोधात्। मयैव दारुणया एवं विप्रलब्ध आर्यपुत्र। **विप्र-**

---

१ 'मुणिस्सदि' (ज्ञास्यति) टी. २ 'परिवाद' टी. ३ 'विवरीद' (विपरीत) क-घ-च. ४ '°भूमिगतविप्रलम्भन्' क-घ-च.

**सीता**—मए जेव्व दारुणाए विप्पलद्धो अज्जउत्तो। मयैव दारुणया विलब्ध आर्यपुत्रः।

**वासन्ती**—देव पश्य पश्य

**पौलस्त्यस्य जटायुषा विघटितः कार्ष्णायसोऽयं रथ-**
**स्ते चैते पुरतः पिशाचवदनाः कङ्कालशेषाः खराः।**
**खड्गच्छिन्नजटायुपक्षतिरितः सीतां चलन्तीं वह-**
**न्नन्तर्व्यापृतविद्युदम्बुद इव द्यामभ्युदस्थादरिः ॥ ४३ ॥**

**सीता**—( सभयम् ) अज्जउत्त तादो वावादीअदि अहं वि अवहरिज्जामि। ता परित्ताहि। आर्यपुत्र तातो व्यापाद्यते अहमप्यपह्रिये। तत्परित्रायस्व।

**रामः**—( सावेगमुत्थाय ) आः पाप तातप्राणसीतापहारिन् क यासि।

**वासन्ती**—अयि देव राक्षसकुलप्रलयधूमकेतो कस्मिन्नद्यापि ते मन्युविषय।

**सीता**—अम्मो अहं वि उब्भन्तम्हि। अहो अहमप्युद्भ्रान्तास्मि।

**रामः**—अन्य एवायमधुना विपर्ययो वर्तते।

---

लब्धः वञ्चित पतिस्पर्शमात्रेणेति भाव। 'विप्रलब्धस्तु वञ्चित' इत्यमर. ॥ अन्यतो दर्शयन्ती मनो विनोदयति–देवेति ॥ **पौलस्त्यस्य जटायुषेति** ॥ ४३ ॥ **पौलस्त्यस्य** रावणस्य। कृष्णायोमय **कार्ष्णायसः** कृष्णायसस्वन्धी वा। कृष्ण नील च तत् अय लोह तद्विकार इति वा। कार्ष्णायस इति कथन दार्ढ्यातिशयसूचकम्। पिशाचानामिव वदनानि येषा ते। **कङ्कालैः** शरीरास्थिभि। **शेषाः** अनितरा कृशा इति यावत्। अत एव नरेन तावदेन एव यान्ति इति परीक्ष्य ऋतुपर्णस्य रथे कृशतरा वाजिन योजिता इति **महाभारते**। **खराः** वेगादिषु तुरङ्गाधिकाः। 'खचर' इति **महाराष्ट्राः**। **जटायोः पक्षतिः** पक्षमूलम्। 'जटायुवत्सङ्गिरथो न धन्य.' इति **बोधायनरामायणे**। **चलन्तीं** कम्पमानाम्। **अन्तः** स्वात्मनि। **व्यापृता** स्फुरन्ती **विद्युत्** यस्य। **द्यां** आकाशम्। **अरिः** रावण ॥४३॥ हा आर्यपुत्र तातो व्यापाद्यते। **तातो** जटायु.। **व्यापाद्यते** हन्यते। अहमपि अवह्रिये अपह्रिये। अपहृता भवामीत्यर्थ। परित्रायस्व परित्रायस्व। आवेगः संभ्रमातिशय.। **प्रलये** नाशे। **धूमकेतुः** उत्पातविशेष। **हे तव मन्योः** कोपस्य **विषयः** गोचर। अरिरित्यनुपज्यते। अहो उद्भ्रान्तास्मि। **विपर्ययः**

---

१ 'पश्यैते' ब–घ. २ 'ज्वलन्तीं' ब–घ. ३ 'नन्तर्व्याकुल' क–ख–ब. ४ '०केतो अद्यापि' ख–घ. ५ 'अन्यथै एवायमधुना प्रलापो वर्तते' ब–ध.

उपायानां भावादविरतविनोदव्यतिकरै-
विमर्दैर्वीराणां जगति जनितात्यद्भुतरसः ।
वियोगो मुग्धाक्ष्याः स खलु रिपुघातावधिरभूत्
कथं तूष्णीं सह्यो निरवधिरयं त्वप्रतिविधः ॥ ४४ ॥

सीता—णिरवधित्ति हा हदम्हि मन्दभाइणी । निरवधिरिति हा हतास्मि मन्दभागिनी ।

रामः—हा कष्टम् ।

व्यर्थं यत्र कपीन्द्रसख्यमपि मे वीर्यं हरीणां वृथा
प्रज्ञा जाम्बवतोऽपि यत्र न गतिः पुत्रस्य वायोरपि ।
मार्गं यत्र न विश्वकर्मतनयः कर्तुं नलोऽपि क्षमः
सौमित्रेरपि पत्रिणामविषये तत्र प्रिये क्वासि मे ॥ ४५ ॥

सीता—बहुमण्णाविदम्हि तं पुव्वविरह । बहुमानितास्मि तं पूर्वविरहम् ।

रामः—सखि वासन्ति दुःखायैव सुहृदामिदानीं रामस्य दर्शनम् । कियच्चिरं त्वा रोदयिष्यामि । तदनुजानीहि मां गमनाय ।

---

व्यलास ॥ उपायानां भावादिति ॥ उपायानां सामादीनां चतुर्णाम् । भावात् अविरतं सन्ततम् विनोदव्यतिकराः कौतुकव्यापारा येषु । 'विनोद कौतुके हास्ये' इति, 'व्यापारे मुदि सम्बन्धे योगे व्यतिकरे' इति नामार्णवशब्दार्णवौ । विमर्दैः सङ्ग्रामैः । रिपुघातः अवधिः अवसानं यस्य । 'वृथार्थेऽपि तूष्णीम्' इति रभसः । 'परित्यागवियोगान्तघाता प्रविलयास्तु ता' इति केदारः ॥ ४४ ॥ निरवधिरिति हा हतास्मि । पूर्ववियोगापेक्षया आधुनिकवियोगस्य वैलक्षण्यमाह ॥ व्यर्थं यत्र कपीन्द्रेति ॥ ४५ ॥ यच्छब्दत्रयेण प्रविलय परामृश्यते । अविषये अगोचरे । तत्र तस्मिन् प्रविलये इति शेषः । यत्रेति पञ्चधा वक्तव्ये त्रिधा कथनं प्रक्रमभङ्गः । 'न स्थातुं न पलायितुं चलितुं नोन्मीलितुं नो हातुं निजजीवितं प्रभवति' इति लीलाधरप्रयोग इव अनुमाह्य । केचिदविषये इति पाठमाश्रित्य य इत्यध्याहारमुररीचक्रुः । तत् कुररीकन्दितमिव परिहास्यम् । यत्रेति प्रायपाठ, प्रतीतस्य प्रातिकूल्यात् । अपिनयमधिकम् ॥ ४५ ॥

---

१ 'अविरल' न. २ '॰व्यतिकर' व. ३ 'जनितजगदत्यद्भुत॰' न. ४ 'कष्ट' न. ५ 'तु प्रविलय' न, 'निरवधिरिदानीं तु विरह.' घ. ६ 'जाम्बवतो न यत्र' न ७ 'अविषय' घ. ८ 'बहुमाणिदह्मि पुव्वविरहे' न.

**सीता**—( सोद्वेगमोहं तमसामाश्लिष्य ) भअवदि तमसे गच्छदि दाणिं अज्जउत्तो । ( इति मूर्च्छति ) भगवति तमसे गच्छतीदानीमार्यपुत्रः ।

**तमसा**—*वत्से समाश्वसिहि समाश्वसिहि* । नन्वावामायुष्मतोः कुशलवयोर्वर्षवर्धनमङ्गलानि सम्पादयितुं भागीरथीपदान्तिकमेव गच्छावः ।

**सीता**—भअवदि पसीद । खणमेत्त वि दाव दुल्लहदंसणं जणं पेक्खामि । भगवति प्रसीद । क्षणमात्रमपि तावद्दुर्लभदर्शनं जनं प्रेक्षे ।

**रामः**—अस्ति चेदानीमश्वमेधाय सहधर्मचारिणी मे ।

**सीता**—( सोत्कम्पम् ) अज्जउत्त का । आर्यपुत्र का ।

**रामः**—हिरण्मयी सीताप्रतिकृतिः ।

**सीता**—( सोच्छ्वासास्रम् । ) अज्जउत्तो दाणिं सि तुमं । अम्महे उक्खादिदं दाणिं मे परिच्चाअलज्जासल्लं अज्जउत्तेण । आर्यपुत्र इदानीमसि त्वम् । अहो उत्खातमिदानीं मे परित्यागलज्जाशल्यमार्यपुत्रेण ।

**रामः**—तत्रापि तावद्बाष्पदिग्धं चक्षुर्विनोदयामि ।

**सीता**—धण्णा सा जा एव्वं अज्जउत्तेण बहुमण्णीअदि जा अ अज्जउत्तं विणोदअन्ती आसाणिबन्धणं जादा जीअलोअस्स । धन्या सा यैवमार्यपुत्रेण बहु मन्यते या चार्यपुत्रं विनोदयन्त्याशानिबन्धनं जाता जीवलोकस्य ।

**तमसा**—( सस्मितस्नेहास्रं परिष्वज्य । ) अयि वत्से एवमात्मा स्तूयते ।

---

बहुमानितासि पूर्वविरह, वहिरुत्सेलयं । उद्वेगो भयसम्भ्रम ॥ हा भगवति तमसे गच्छतीदानीमार्यपुत्र । वर्षवर्धनं अब्दपूर्ति । भगवति प्रसीद । क्षणं तावद्दुर्लभदर्शनमार्यपुत्रं पश्यामि । क्षणमिति पाठस्साधु । दुर्लभेति ध्वनि । आर्यपुत्र का । आर्यपुत्र इदानीमसि त्वम् । अहो उत्खातमिदानीं परित्यागलज्जाशल्यमार्यपुत्रेण । उत्खातं आकृष्टम् । तत्रापि कनकसीताप्रतिकृतावित्यर्थं । चक्षुः चर्मे । धन्या खलु सा या एवमार्यपुत्रेण बहु मन्यते या आर्यपुत्रं विनोदयन्ती आशाबन्धनं जाता जीवलोकस्य । जीवलोकस्यह-पस्य । अथवा–गोपीकृष्ण सीताराम इत्यादौ यथा गोपीयुक्तकृष्ण सीतायुक्त-राम इति समार्थीयते । तथा प्रकृते जीवयुक्ताः लोका भुवनानि यस्मिन् तस्य जीवलोकस्य रामस्येत्यर्थः । जीवलोक इत्युपलक्षणम् । तथा च जीवलोकस्य रामस्य चाभेद सिद्ध । अत एव 'विश्वं विष्णु' इति । 'वासनाद्वासुदेवस्य' इत्यादि पौराणिका इति । आशेति यथा रामं विहाय आशा न निर्गच्छेत् ।

**सीता**—( सलज्जमधोमुखी स्वगतम् ) परिहसिदह्मि भअवदीए । परिहसितास्मि भगवत्या ।

**वासन्ती**—महानयं व्यतिकरोऽस्माकं प्रसादः । गमनं प्रति यथा कार्यहानिर्न भवति तथा कार्यम् ।

**सीता**—पडिऊला दाणिं मे वासन्दी संवुत्ता । प्रतिकूलेदानीं मे वासन्ती संवृत्ता ।

**तमसा**—वत्से एहि गच्छाव ।

**सीता**—( सकष्टम् ) एव्वं करेह्म । एवं कुर्वे ।

**तमसा**—कथं वा गम्यते । यस्मात्तव

> प्रत्युप्तस्येव दयिते तृष्णादीर्घस्य चक्षुषः ।
> मर्मच्छेदोपमैर्यत्नैः संनिकर्षो निरुध्यते ॥ ४६ ॥

**सीता**—णमो णमो अपुव्वपुण्णजणिददंसणाणं अज्जउत्तचलणकमलाणं।

तथा आशया बन्धनं जातेति भावः । **सस्मितेति**-सीताप्रतिहतिव्याजेन आत्मानमेव स्तौति इति स्मितानिर्भावः, रामः प्रतिकृतावप्येवमनुरक्त इति स्नेहसन्दर्भः । ईर्ष्ययोरीदृशी दशेत्यस्योदयः । एवमादिषु तेषु तेषु स्थलेषु ते ते हेतवः कुशाग्रबुद्धिभिरूह्याः । आत्मेति—त्वं सीतेति यावत् । परिहसितास्मि भगवत्या । अनुजानीहि मां गमनायेति वादिनं रामं प्रत्याह— **महानिति** । **व्यतिकरः** सन्तोषः । 'मुदि व्यतिकरः' इति नामार्णवः । **गमनं प्रति** प्रमादस्तवेति शेषः । अस्माकं महान्व्यतिकरोऽयमित्यन्वयः । **कार्येति**—तदेहि संभावयाम्यानिति द्वितीयाङ्कपूर्तौ शम्बूकोक्तं भगवदगस्त्यसन्दर्शनरूपकार्यमिति भावः । प्रतिकूला इदानीं मे वासन्ती संवृत्ता । एवं कुर्वे । गमनमिति प्रयाससाध्यमित्याह–**प्रतीति** । **दयिते** इति सीतां प्रति संबोधनचमत्कारः । वस्तुतः **दयिते** भर्तरि रामभद्रे ॥ **प्रत्युप्तस्येवेति** ॥ ४६ ॥ **प्रत्युप्तस्येव** स्थितस्येत्यर्थः । **तृष्णा** दर्शनेच्छा **दीर्घा** यस्मिन् । तस्य **चक्षुषः** । **संनिकर्षः** **मर्मच्छेदोपमैः** अरुन्तुदैः **यत्नैः** साहसैः । **निरुध्यते** अतिबलात्कारादितस्त्वमन्यत्र नीयसे इति भावः । चक्षुष इति जातावेकवचनम् । 'विपुलं चक्षुषि विस्तृतं नितम्बे' इति **गौडपादाचार्याः** । 'चरणं शरणं त्वदीयं' इति **श्रीकालहस्तीश्वरशतके वरदन्तश्च** ॥ ४६ ॥ नमस्सुकृतपुण्यजन-

१ 'गमनं पुनर्यथा' क. २ 'तथास्ताम्' क–घ–व. ३ '°च्छेदपरैर्वैराकर्षो न समाप्यते' क–घ–व. ४ 'सुकिदपुण्णजणदंसणिज्जाण' ( सुकृतपुण्यजनदर्शनीयानां ) न–टी.

नमो नमोऽपूर्वपुण्यजनितदर्शनाभ्यामार्यपुत्रचरणकमलाभ्याम् । ( इति मूर्च्छति )

**तमसा**—वत्से समाश्वसिहि समाश्वसिहि ।

**सीता**—( समाश्वस्य । ) किअचिर वा मेहन्तरेण पुण्णिमाचन्दस्स दंसणं । चिरचिरं वा मेघान्तरेण पूर्णिमाचन्द्रस्य दर्शनम् ।

**तमसा**—अहो संविधानकम् ।

> एको रसः करुण एव निमित्तभेदा-
> द्भिन्नः पृथक्पृथगिवाश्रयते विवर्तान् ।
> आवर्तबुद्बुदतरङ्गमयान्विकारा-
> नम्भो यथा सलिलमेव हि तत्समस्तम् ॥ ४७ ॥

**रामः**—अयि विमानराज इत इतः ।

---

दर्शनीयाभ्यामार्यचरणाभ्याम् । सुकृतपुण्येति पुनरुक्तिविरोध । सुष्ठु कृतपुण्या इति परिहार । ते च ते जना. । शोभनं कृत्यं कृतं येन स. सुकृतः स चासौ पुण्यजन राक्षस विभीषण इति यावत् । चिरचिरं मे बाष्पान्तरेण पूर्णचन्द्रस्य दर्शनम् । अन्तरेण बाष्पस्योदयात् पूर्वक्षणरूपेण अवकाशेनेत्यर्थ । 'अन्तरमवकाशे' इत्यमर । रामरूपपूर्णचन्द्रस्य बाष्पसङ्कटेन मुखेन्दुदर्शनम्, न तु सौलभ्येनेति भाव ॥ कविस्तमसावाक्यव्याजेनात्मनैपुणं स्तुवन् नाटकविदग्धमल्लैनरदैन्यभरेन करुणरसप्राधान्यदोष दत्तवन (?) क्रमेण परिहरति—अहो इति । अहो आश्चर्यं ॥ **एको रसः करुण** इति ॥ ४७ ॥ **निमित्तभेदात्** कारणविच्छित्तिविशेषात् । **भिन्नः** भेदित. सन् । **पृथक् पृथक्** अन्यरसात्मनेति यावत् । **विवर्तान्** विपरीतपरिणामान् **आश्रयते** भजति । 'अतत्त्वपरिणामे स्याद्विवर्त ' इति कपिलः । अत्र करुणरस एव अन्यरसात्मनापि परिणत इति फलितोऽर्थ । क्वचिद्द्वीपे भस्मसात्कृतवेत्रलताजालेषु स्थलेषु सत्सु कदलीवनाविर्भाव इति प्रसिद्धि तद्वदिहाप्युन्नेयमिति केचित्कल्पयन्तम् । 'स्यादावर्तोऽम्भसां भ्रम ' इत्यमर । **यथा** आश्रयते इत्यध्याहार । **समस्तं तत्** आवर्तादिकं **सलिलमेव हि** । तथा च आवर्तबुद्बुदतरङ्गाद्युपाधिभि. भिन्नं सदप्यम्भ. वस्तुत एकमेव । तथा शृङ्गारादिरसोपाधिभिर्भिन्न इव दृश्यमानोऽपि करुणो रस. अन्यत्वस्तदभिन्न सन् एक एवेति भाव ॥ अस्मिन् पद्ये केचिदारम्भशूरा 'नज्ञापि नर न रञ्जयति' इति भर्तृहरिगिरा सार्थकयन्तीति दिक् ॥ ४७ ॥ **इत इतः** आगच्छेति शेष ॥ अथ मधुरेणैव

---

१ 'मे बाष्पान्तरेण' टी. २ 'न पु[illegible]' न; 'पूर्णचन्द्रस्य दर्शनम्' [illegible]

## ॥ चतुर्थोऽङ्कः ॥

( ततः प्रविशतस्तापसौ । )

एकः—सौधातके दृश्यतामद्य भूयिष्ठसंनिधापितातिथिजनस्य समधिकारम्भरमणीयता भगवतो वाल्मीकेराश्रमपदस्य । तथाहि ।

नीवारौदनमण्डमुष्णमधुरं सद्यःप्रसूताप्रिया-
पीतादभ्यधिकं तपोवनमृगः पर्याप्तमाचामति ।
गन्धेन स्फुरता मनागनुसृतो भक्तस्य सर्पिष्मतः
कर्कन्धूफलमिश्रशाकपचनामोदः परिस्तीर्यते ॥ १ ॥

सौधातकिः—स्वागतं अनेकविचाराणां निर्गतकूर्चानां अनध्यायकारणानां । स्वागतमनेकप्रकाराणां जीर्णकूर्चानामनध्यायकारणानाम् ।

प्रथमः—( विहस्य । ) अपूर्वः कोऽपि ते बहुमानहेतुर्गुरुषु सौधातके ।

---

अथ चतुर्थोऽङ्कः ॥ अथ तावद्वाल्मीकिवचनसन्दर्भानुरोधादरुन्धतीजनकादिप्रवेशसत्त्वात् निष्प्रयोजनं कवि तदनुभूतमितिवृत्तांशं सूचयन् विष्कम्भमुपक्रमते—तत इति ॥ एकः दाण्डायनिरित्यर्थः । सुचानकस्यापत्यं सौधातकिः । भवेति ध्वनिः । समधिकतरेति क्वचित् पाठः पुनरुक्तः । समधिकेति अधिकतरेति च सुपाठौ । भागो माहात्म्यम् । पदं स्थानम् । तदेव वर्णयति—नीवारौदनमिति ॥ १ ॥ सद्यःप्रसूतया प्रियया । पीतादभ्यधिकं सुदुर्लभमिति यावत् । नीवाराः तृणधान्यानि । तदोदनमण्डं रसाग्रम् । 'स्यान्मण्डम्' इत्यमरः । 'कञ्जी' इति द्राविडाः । पर्याप्तं यथेप्सितम् । आचामति पिबति । 'चूषतीति' माठरः । मनाक् ईषत् । स्फुरता स्पष्टभवता । सर्पिष्मतः घृतवतः भक्तस्य अन्नस्य गन्धेनानुसृतः अन्वितः । शाकानां भक्ष्यपत्राणाम् । पचनं पाकः । तस्यामोदः परिमलः । 'परिस्तीर्यते एधते' इति श्रीनाथः । 'कर्कन्धूर्बदरी' इति, 'गन्धः परिमलामोदौ' इति हारवर्णविश्वनाथौ ॥ 'हरिग्यालि सुधारणके' इति सततवास्याम् ॥ १ ॥ स्वागतमनेकप्रकारेभ्यो जीर्णकूर्चेभ्योऽनध्यायकारणेभ्यः । 'शिष्टमानवस्थायी यत्नाशुच्चवन्तदः ।' इति सनयरहति । देवानीति दैवीपरलस्य । 'कूर्चोऽस्त्री पुंसः पितृकरोमिके' इति

---

१ 'स्वागतमनध्यायकारणानां सन्निवेशनां कल्पविच्छुराणां' (अनध्यायकारणानां जीर्णकूर्चानाम्) ब-ध.

सौधातकिः—भो दण्डाअंण किंणामहेओ एसो महन्तस्स ठविरैस-त्थस्स धुरंधरो अज्ज अदिही आअदो । भो दाण्डायन किंनामधेय एष महतः स्थविरसार्थस्य धुरन्धरोयातिथिरागत. ।

दाण्डायनः—धिक्प्रहसनम् । नन्वयमृष्यशृङ्गाश्रमादरुन्धतीपुरस्कृतान् महाराजदशरथस्य दारानधिष्ठाय भगवान्वसिष्ठः प्राप्तः । तत्किमेवं प्रलपसि ।

सौधातकिः—हुं वसिट्ठो । हुं वसिष्ठः ।

दाण्डायनः—अथ किम् ।

सौधातकिः—मए उण जाणिदं वग्घो वा विओ वा एसोत्ति । मया पुनर्ज्ञातं व्याघ्रो वा वृको वैष इति ।

दाण्डायनः—आः किमुक्तं भवति ।

सौधातकिः—जेणं परावडिदेण जेव्व सा वराई कविला कल्लाणी मड-मडाइआ । येन परापतितेनैव सा वराकी कपिला कल्याणी मडमडायिता ।

दाण्डायनः—समांसो मधुपर्क इत्याम्नायं बहुमन्यमानाः श्रोत्रियाया-भ्यागताय वत्सतरीं महोक्षं वा महाजं वा निर्वपन्ति गृहमेधिनः । तं हि धर्मं धर्मसूत्रकाराः समामनन्ति ।

सौधातकिः—भो णिग्गिहीदोसि । भो निगृहीतोऽसि ।

दाण्डायनः—कथमिव ।

सौधातकिः—जेण आअदेसु वसिट्ठमिस्सेसु वच्छदरी विससिदा । अज्ज जेव्व पंचाअदस्स राएसिणो जणअस्स भअवदा वम्मीइणा दहिमहूहिं जेव्व

---

ससारावतं. । 'दाढी' इति महाराष्ट्राः । अणज्झाअ इत्यत्र 'ध्यह्योर्झ' इति झत्वम् ॥ भो दाण्डायन किंनामधेय इदानीमेष महत स्थविरसार्थस्य धुरन्धरोऽयातिथिरागत । दण्डायनस्यापत्य दाण्डायनिः । सार्थः सङ्घ. । प्रहास प्रकर्षेण हासम् । करोषीति शेष । अधिष्ठायेति-दारानुद्दिश्य अधि-ष्ठानं नियन्तृत्वमधिगम्येति यावत् । हुं वसिष्ठ । मया पुनर्ज्ञातं व्याघ्र कोऽ-प्येष इति । आः खेदे । किं प्रश्ने । येनागच्छतैव सा वराकी कपिला मड-

---

१ 'भण्डाअण' ब-घ. २ 'इथिआसत्थस्स' क-न. ३ 'अज्ज चीरधारओ' ब-घ ४ 'वग्घो त्ति एसोत्ति' न, 'व्याघ्र. कोप्येष इति' टी. ५ 'तेण' ब-घ. ६ 'कल्लाणी बलामोडिअ' न. ७ एतन्नास्ति न-पुस्तके. ८ 'पचन्ति' न. ९ '°मेधिन इति हि' ब-घ. १० 'पज्जागदस्स' (पर्यागतस्य) क-व.

णिव्वत्तिदो महुवक्को । वच्छतरी उण विसज्जिदा । येनागतेषु वसिष्ठमिश्रेषु वत्सतरी विशसिता । अद्यैव प्रत्यागतस्य राजर्षेर्जनकस्य भगवता वाल्मीकिना दधिमधुभ्यामेव निर्वर्तितो मधुपर्कः । वत्सतरी पुनर्विसर्जिता ।

दाण्डायनः—अनिवृत्तमांसानामेवं कल्पमृषयो मन्यन्ते । निवृत्तमांसस्तु तत्रभवान् जनकः ।

सौधातकिः—किंणिमित्तं । किंनिमित्तम् ।

दाण्डायनः—स तदैव देव्याः सीतायास्तादृशं दैवदुर्विपाकमुपश्रुत्य वैखानसः संवृत्तः । तथास्य कतिपये संवत्सराश्चन्द्रद्वीपतपोवने तपस्तप्यमानस्य ।

सौधातकिः—तदो किंत्ति आअदो । ततः किमित्यागतः ।

दाण्डायनः—चिरन्तनप्रियसुहृदं भगवन्तं प्राचेतसं द्रष्टुम् ।

सौधातकिः—अवि अज्ज संबन्धिणीहिं समं संवुत्तं से दंसणं ण वेत्ति। अप्यद्य सम्बन्धिनीभिः समं संवृत्तमस्य दर्शनं न वेति ।

दाण्डायनः—संप्रत्येव भगवता वसिष्ठेन देव्याः कौसल्यायाः सकाशं भगवत्यरुन्धती प्रहिता यत्स्वयमुपेत्य वैदेहो द्रष्टव्य इति ।

सौधातकिः—जह एदे हविरा परप्परं मिलिदा तह अम्हे वि वडुहिं सह मिलिअ अणज्झाअमहुस्सवं खेलन्तो सम्मेम्हे । अहं तुम्ह सो जणओ । ( इति परिक्रान्तः । ) यथैते स्थविराः परस्परं मिलितास्तथावामपि बटुभिः सह मिलित्वानध्यायमहोत्सवं खेलन्तौ मानयावः । अथ क स जनकः ।

---

मडमडायिता । 'वराको नीचदीनयोः' इति नानार्थमञ्जरी । मडमडेतिशब्दानुकारः । वपाछेदनार्थं । आम्नायं वेदम् । भो निगृहीतोऽस्मि । यदागतेषु वसिष्ठमिश्रेषु एवमद्यैव प्रत्यागताय राजर्षये भगवता वाल्मीकिना दधिमधुभिरेव निर्वर्तितो मधुपर्कः वत्सतरी पुनर्विसर्जिता । मिश्रशब्दः पूजार्थः ॥ 'निवृत्तमांसो निर्मांसो वृत्तमांसस्तु मांसभुक् ।' इति, 'कल्पः स्याद्विधिः ।' इति केदारकपिलौ । किंनिमित्तम् । 'स तु वैखानसो यः स्यात्तपस्वी वनचारी जितेन्द्रियः ।' इत्यमरमाला । ततः किमित्यागतः । ततः चन्द्रद्वीपतपोवनादपि । अद्य सम्बन्धिनीभिस्समं निवृत्तमांसस्य दर्शनं न वेति । यथैते सर्वे स्थविराः परस्परं मिलिताः तथा वयमपि बटुकैः सह मिलिताः अनध्यायम-

---

१ 'म्याहुरन्ति केचित्' म. २ 'संमानेम्ह' ( संमावयाव. ) क–ख–घ. ३ 'अह...जणओ' इत्येतन्नास्ति क–ख–घ–पुस्तकेषु.

**सौधातकि** —भो दण्डाअण किणामहेओ एसो महत्तस्स ठविरसत्थस्स धुरधरो अज्ज अदिही आअदो । भो दाण्डायन किंनामधेय एष महत स्थविरसार्थस्य धुरन्धरोऽद्यातिथिरागत ।

**दाण्डायन** —धिक्प्रहसनम् । नन्वयमृष्यशृङ्गाश्रमादरुन्धतीपुरस्कृतान् महाराजदशरथस्य दारानधिष्ठाय भगवान्वसिष्ठ प्राप्त । तत्किमेव प्रलपसि ।

**सौधातकि** —हु वसिट्ठो । हु वसिष्ठ ।

**दाण्डायन** —अथ किम् ।

**सौधातकि** —मए उण जाणिदं वग्घो वा विओ वा एसोत्ति । मया पुनर्ज्ञात व्याघ्रो वा वृको वैष इति ।

**दाण्डायन** —आ किमुक्त भवति ।

**सौधातकि** —जेण परावडिदेण जेव्व सा वराई कविला कल्लाणी मड मडाइआ । येन परापतितेनैव सा वराकी कपिला कल्याणी मडमडायिता ।

**दाण्डायन** —समासो मधुपर्क इत्याम्नाय बहुमन्यमाना श्रोत्रियाया भ्यागताय वत्सतरीं महोक्ष वा महाज वा निर्वपन्ति गृहमेधिनं । त हि धर्मं धर्मसूत्रकारा समामनन्ति ।

**सौधातकि** —भो णिगिहीदोसि । भो निगृहीतोऽसि ।

**दाण्डायन** —कथमिव ।

**सौधातकि** —जेण आअदेसु वसिट्ठमिस्सेसु वच्छदरी विससिदा। अज्ज जेव्व पंचाअदस्स राएसिणो जणअस्स भअवदा वम्मीइणा दहिमहूहिं जेव्व

---

ससारावत । दासी इति महाराष्ट्रा । अणज्झाअ इत्यत्र 'ध्यह्योर्झ' इति झत्वम् ॥ भो दाण्डायन किंनामधेय इदानीमेव महत स्थविरसार्थस्य धुरन्धरोऽद्यातिथिरागत । दण्डायनस्यापत्य दाण्डायनि । सार्थ सङ्घ । प्रहास प्रकर्षेण हासम् । करोषीति शेष । अधिष्ठायेति-दारानुद्दिश्य अधिष्ठान नियन्तृत्वमधिगम्येति यावत् । हु वसिष्ठ । मया पुनर्ज्ञात व्याघ्र वोऽप्येष इति । आ कोपे । किं प्रश्ने । येनागच्छतैव सा वराकी कपिला मड

---

१ 'भण्णाअण ख-घ २ 'इथिआसत्थस्स क-ग ३ 'अज्ज चीरधारओ' ख-घ ४ 'वग्घो विअ एसोत्ति' ग, 'व्याघ्र वोप्येष इति टी ५ 'तेण' ख-घ ६ 'कल्लाणी बलामोडिअ' ग ७ एतन्नास्ति ग-पुस्तके ८ 'पचन्ति' ग ९ '°मेधिन इति हि' ख-घ १० 'पञ्चागदस्स' ( पर्यागतस्य ) क-ख

णिव्वत्तिदो महुवक्को । वच्छतरी उण विसज्जिदा । येनागतेषु वसिष्ठमिश्रेषु वत्सतरी विशसिता । अद्यैव प्रत्यागतस्य राजर्षेर्जनकस्य भगवता वाल्मीकिना दधिमधुभ्यामेव निर्वर्तितो मधुपर्कः । वत्सतरी पुनर्विसर्जिता ।

**दाण्डायनः**—अनिवृत्तमांसानामेवं कल्पमृषयो मन्यन्ते । निवृत्तमांसस्तु तत्रभवान् जनकः ।

**सौधातकिः**—किंणिमित्तं । किंनिमित्तम् ।

**दाण्डायनः**—स तदैव देव्याः सीतायास्तादृशं दैवदुर्विपाकमुपश्रुत्य वैखानसः संवृत्तः । तयास्य कतिपये संवत्सराश्चन्द्रद्वीपतपोवने तपस्तप्यमानस्य ।

**सौधातकिः**—तदो किंत्ति आअदो । ततः किमित्यागतः ।

**दाण्डायनः**—चिरन्तनप्रियसुहृदं भगवन्तं प्राचेतसं द्रष्टुम् ।

**सौधातकिः**—अवि अज्ज संबन्धिणीहिं समं संवुत्तं से दंसणं ण वेत्ति । अप्यद्य सम्बन्धिनीभिः समं संवृत्तमस्य दर्शनं न वेति ।

**दाण्डायनः**—संप्रत्येव भगवता वसिष्ठेन देव्याः कौसल्यायाः सकाशं भगवत्यरुन्धती प्रहिता स्वयमुपेत्य वैदेहो द्रष्टव्य इति ।

**सौधातकिः**—जह एदे इविरा परप्परं मिलिदा तह अह्मे वि वडुएहिं सह मिलिअ अणज्झाअमहुस्सवं खेलन्तो मएेम्ह । अहं तुम्य सो जणओ । ( इति परिक्रान्तः । ) यथैते स्थविराः परस्परं मिलितास्तथावामपि बटुभिः सह मिलित्वानध्यायमहोत्सवं खेलन्तो मानयावः । अथ क स जनकः ।

---

मडायिना । 'वराकौ नीचदीनयोः' इति नानार्थमञ्जरी । मडमडेतिशब्दानुकारः । उपाकृतेत्यर्थं । आम्नायं वेदम् । भो निगृहीतोऽसि । यदागतेषु वसिष्ठमिश्रेषु एवमद्यैव प्रत्यागताय राजर्षये भगवता वाल्मीकिना दधिमधुभिरेव निर्वर्तितो मधुपर्कः वत्सतरी पुनर्विसर्जिता । मिश्रशब्दः पूजायाम् ॥ 'निवृत्तमांसो निर्मांसो वृत्तमांसस्तु मामल' ।' इति, 'कल्पः स्याद्विधि.' इति केदारकपिलौ । किंनिमित्तम् । 'स तु वैखानसो यः स्याद्युक्ताचारो जितेन्द्रिय. ।' इत्यमरमाला । ततः किमित्यागतः । ततः चन्द्रद्वीपतपोवनादपि । अद्य संबन्धिनीभिस्समं निर्वृत्तमस्य दर्शनं न वेति । यथैते सर्वे स्थविराः परस्परं मिलिताः तथा वयमपि बटुकैः सह मिलिताः अनध्यायम-

---

१ 'म्याहुरन्ति केचित्' न. २ 'समानेन्ह' ( संमानयावः ) क-ग-घ. ३ 'अह...जणओ' इत्येतन्नास्ति क-ख-घ-पुस्तकेषु.

दाण्डायन —तथाय महावादी पुराणराजर्षिर्जनक प्राचेतसवसिष्ठावुपास्य सम्प्रत्याश्रमस्य बहिर्वृक्षमूलमधितिष्ठति । य एष,

हृदि नित्यानुषक्तेन सीताशोकेन तप्यते ।
अन्त प्रसृप्तदहनो जरन्निव वनस्पतिः ॥ २ ॥

( इति निष्क्रान्तौ । )

मिश्रविष्कम्भ ।

[ तत प्रविशति जनक । ]

जनक.—अपत्ये यत्तादृग्दुरितमभवत्तेन महता
विषक्तस्तीव्रेण व्रणितहृदयेन व्यथयता ।
पटुर्धारावाही नव इव चिरेणापि हि न मे
निकृन्तन्मर्माणि क्रकच इव मन्युर्विरमति ॥ ३ ॥

कष्ट एव नाम जरया दु खेन च दुरासदेन भूय पराकसान्तपनप्रभृतिभिस्तपोभिरात्तरसधातुरमवष्टभो नाद्यापि मम दग्धदेह पतति । अन्धतामिस्रा ह्यसूर्या नाम ते लोकास्तेभ्य प्रतिविधीयन्ते य आत्मघातिन इत्येवमृषयो मन्यन्ते । अनेकसंवत्सरातिक्रमेऽपि प्रतिक्षणपरिभावनास्पष्टनिर्भास

---

होत्सव खेलन्तो मानयाम । अथ क स जनक । तथा अनिर्वचनीय इत्यर्थ । पुराण अनादि च तत् ब्रह्म वेद । वेदस्तत्त्व तपो ब्रह्म' इत्यमर ॥ **हृदि नित्यानुषक्तेनेति** ॥ २ ॥ **अन्त** कोटरान्तरे । **जरन्** जीर्ण । 'तैरपुष्पाद्वनस्पति ' इत्यमर ॥ २ ॥ **इति मिश्रविष्कम्भ** ॥ 'उदात्तनीचपात्रोक्तो मिश्रविष्कम्भ उच्यते' इति **रूपकादर्शोक्ते** ॥ **अपत्ये यत्तादृगिति** ॥ ३ ॥ **अपत्ये** सीतायाम् । **दुरितं** अपवादरूप पापम् । तेन पापेन **विषक्त** विशेषेण सक्त । **पृथु** महान् । **धारावाही** अविच्छिन्नधार । अत एव **चिरेणापि** बहुकाले गतेऽपि **नव**. **इव** स्थित । **क्रकच**. 'करवत' इति **महाराष्ट्रा** । **मन्यु** न विरमति हि । 'मन्युर्दैन्ये क्रतौ क्रुधि' इत्यमर ॥ ३ ॥ **एव नाम** कष्टमिति वाक्यखण्ड । **दुरासदं** दु खविशेषणम् । स्वय स्फात यथा तथा **पराकसान्तपनप्रभृतिभि** कृच्छ्ररूपैस्त**पोभिरपि** उपलक्षित इत्यर्थ । '**रसा** रक्तादय ' इति, 'इन्द्रियाणि पृथिव्यादि पञ्चभूतानि धातव ' इति, अवष्टम्भाश्रयाधारा ' इति **रत्नशास्त्र**हेमचन्द्रा ।

---

१ 'तदय' क-घ-च २ 'ज्वलन्निव' ब-घ ३ 'तपोभि शोषितात्त दारीरधातोरवष्टम्भ एव महानयाति न पतति' न; 'धातुरनुपयुज्यमान ' ब-घ ४ 'लोका प्रेत्य तेभ्य ' न

प्रत्यग्र इव न मे दारुणो दुःखसंवेगः प्रशाम्यति । अयि मातर्देवयजनसंभवे सीते ईदृशो मे निर्माणभागः परिणतो येन लज्जया स्वच्छन्दमाक्रन्दितुमपि न शक्यते । हा पुत्रि भगवति वसुन्धरे सत्यमतिदृढासि ।

अनियतरुदितस्मितं विराज-
त्कतिपयकोमलदन्तकुड्मलाग्रम् ।
वदनकमलकं शिशोः स्मरामि
स्खलदसमञ्जसमञ्जु जल्पितं ते ॥ ४ ॥

त्वं वह्निर्मुनयो वसिष्ठगृहिणी गङ्गा च यस्या विदु-
र्माहात्म्यं यदि वा रघोः कुलगुरुर्देवः स्वयं भास्करः ।
विद्यां वागिव याममूत भवती तद्वत्तु या दैवतं
तस्यास्त्वद्दुहितुस्तथा विशसनं किं दारुणेऽमृष्यथाः ॥५॥

( नेपथ्ये ) इत इतो भगवतीमहादेव्यौ ।

जनकः—( दृष्ट्वा ) अये गृष्टिनोपदिश्यमानमार्गा भगवत्यरुन्धती । ( उत्थाय ) का पुनर्महादेवीत्याह । ( निरूप्य ) हा हा कथमियं महाराजदशरथस्य धर्मदाराः प्रियसखी मे कौसल्या । क एतत्प्रत्येति सैवेयमिति ।

आसीदियं दशरथस्य गृहे यथा श्रीः
श्रीरेव वा किमुपमानपदेन सैषा ।

---

तथा च सुखलेशाभावाद्दुःखास्पदं देह पतन्त्विति भावः ॥ ननु बालभाव कियतानव आह–अन्धेति । 'इतीत्थमेवमित्येवम्' इति चक्षूरूपः । प्रतिक्षणं परिभावनायाः तिरस्कारस्य । स्पष्टनिर्भासः अवभासः दलात् । प्रत्यग्रः नूतनः । भागः अंशः । येन कारणेन । अनियतमिति ॥ ४ ॥ कुड्मलाः मुकुलाः । कमलकं स्वार्थे कः । स्मरेयं इति वा पाठः ॥ ४ ॥ दृढा निष्ठुरा ॥ त्वमिति ॥ ५ ॥ यदि संभावनायाम् । कुलगुरुर्वसिष्ठः । वाक् सरस्वती । तथा विशसनं मारणप्रलापात्परित्यागनिश्चयः । अमृष्यथाः असहथाः इति यावत् ॥ ५ ॥ भगवती च देवी च भगवतीदेव्यौ । 'देवी कृताभिषेकायाम्' इत्यमरः । महादेवी इति भ्रान्तः पाठः । 'जगन्माता महादेवी सर्वाणी त्रिपुरेश्वरी' इत्यागमतन्त्रोक्त्या महादेवीति नाम्नः परदेवतायामेवोचिततया अन्यत्र संभवेऽप्रचारसंभवात् । 'भूम्नि दाराः' इत्यमरः । प्रत्येति विश्वसिति ॥ आसीदियं दशरथस्येति ॥

---

१ 'दुःख' ग–घ. २ 'शुद्धिं गतायाः' न. ३ 'दृढा' न–क.

कष्टं यतान्यदिव दैववशेन जाता
　　दुःखात्मकं किमपि भूतमहो विपाकः ॥ ६ ॥
य एव मे जनः पूर्वमासीन्मूर्तो महोत्सवः ।
क्षते क्षारमिवासह्यं जातं तस्यैव दर्शनम् ॥ ७ ॥
　　( ततः प्रविशत्यरुन्धती कौसल्या कञ्चुकी च । )

अरुन्धती--ननु ब्रवीमि द्रष्टव्यः स्वयमुपेत्यैव वैदेह इत्येष च कुलगुरोरादेशः । अत एव चाहं प्रेषिता । तत्कोऽयं पदे पदे महाननध्यवसायः ।

कञ्चुकी—देवि संस्तभ्यात्मानमनुरुध्यस्व भगवतो वसिष्ठस्यादेशमिति विज्ञापयामि ।

कौसल्या--ईरिसे काले मिहिलाहिवो मए दिट्ठव्वो त्ति समं जेव्व सव्वाइं दुक्खाइं समुब्भवन्ति । ता ण सक्कुणोमि उव्वट्टमाणमूलबन्धणं हिअअं पज्जवत्थावेदुम् । ईदृशे काले मिथिलाधिपो मया द्रष्टव्य इति सममेव सर्वाणि दुःखानि समुद्भवन्ति । तन्न शक्नोम्युद्वर्तमानमूलबन्धनं हृदयं पर्यवस्थापयितुम् ।

अरुन्धती—अत्र कः सन्देहः ।

सन्तानवाहीन्यपि मानुषाणां
　　दुःखानि सम्बन्धिवियोगजानि ।

---

॥ ६ ॥ यदेन कलङ्केन । कष्टं खेदकारि । चिन्तात्मकं चिन्तास्वरूपम् । अन्यत् जगद्विलक्षणम् । किमपि भूतं जन्तुरिव जाता यतेत्यर्थः । 'कष्टं त्रिषु स्यात्खेदकारिणि' इत्यमरमाला । अत एव 'कष्टा रन्ध्रव्यथा कष्ट' इति मुरारिः । 'चिन्ता हृदयसन्ताप' इति, 'भूतं क्ष्मादौ च जन्तौ च' इति, 'यतानुकम्पने' इति हैमविश्वहलायुधाः । अहो विपाकः विरुद्धपरिणाम इति यावत् । अत्र बुधाबुधास्तावदवगमनभ्रान्तिभ्यां शिरसि दोलायन्ते ॥ ६ ॥ य एव मे जन इति ॥ ७ ॥ जनः कौसल्या । 'स्त्रीपुंसौ कथयेज्जनः' इति काव्यदीपिकायां दण्डी व्याजहार ॥ ७ ॥ गुरोर्वसिष्ठस्य । अध्यवसायः निश्चय । पदे पदे इत्यनेन प्रतिक्षणं भिन्नभिन्न इति व्यज्यते । संस्तभ्य स्थिरीकृत्य । अनुरुध्यस्व अनुवर्तस्व ॥ ईदृशे काले मिथिलाधिपो मया द्रष्टव्य इति सममेव सर्वदुःखानि समुद्भवन्ति । तस्मान्न शक्नोमि उद्वर्तमानमूलबन्धनं हृदयं व्यवस्थापयितुम् । समं युगपद् । उद्वर्तमानं चेष्टमानं मूल-

---

१ 'विकार' न.　२ अस्मात्पूर्वं 'अयमपरः पापो दशाविपर्यासः' इत्यधिकं ब-घ-पुस्तकयोः.　३ 'महानध्यवसायः' न-टी.　४ 'उव्वट्टमाण' घ-घ.　५ 'सदन्तु' क-घ-ध.

दृष्टे जने प्रेयसि दुःसहानि
स्रोतःसहस्रैरिव संप्लवन्ते ॥ ८ ॥

कौसल्या—कहं णु खु वच्छाए वहूए एवं गदे तस्स पिदुणो राएसिणो मे मुहं दंसइ। कथं नु खलु वत्साया वध्वा एवं गते तस्मै पित्रे राजर्षये मे मुखं दर्शयाम ।

अरुन्धती—एष वः श्लाघ्यसम्बन्धी जनकानां कुलोद्वहः ।
याज्ञवल्क्यो मुनिर्यस्मै ब्रह्मपारायणं जगौ ॥ ९ ॥

कौसल्या—एसो सो महाराअस्स हिअअणिव्विसेसो वच्छाए मे वहूए पिदा राएसी सीरद्धओ। हद्धी हद्धी सुमारिदह्मि अणिव्वेदरमणीए दिअसे। हा देव्व सव्वं ण णत्थि। एष स महाराजस्य हृदयनिर्विशेषो वत्साया मे वध्वा पिता राजर्षि सीरध्वज । हा धिक् हा धिक् स्मारितास्मि अनिर्वेदरमणीयान्दिवसान्। हा दैव सर्वं तन्नास्ति ।

जनकः—(उपसृत्य) भगवत्यरुन्धति वैदेह सीरध्वजोऽभिवादयते ।

---

बन्धनं गर्भग्रन्थि यस्य । मूलबन्धन 'काळिज' इति महाराष्ट्रा॰ ॥ सन्तानवाहीन्यपीति ॥ ८ ॥ सन्तान परम्परा दैर्घ्यं वा वहन्ति धरन्ति सन्तानवाहीनि । सम्बन्धिनो बान्धवा । स्रोतसां स्रोतोऽम्बुसरणानाम्। 'पाझर' इति महाराष्ट्रा॰ । संप्लवन्ते प्रवहन्तीति यावत् ॥ ८ ॥ कथं नु माया मे वध्वा एव गते तस्मा पित्रे राजर्षये मुखं दर्शयाम । 'वधू स्नुषा' इति शब्दमाला । गते सतीत्यर्थ । दर्शयाम इति निर्वेदाद्बहुवचनम्। अत एव 'वय तत्त्वान्वेषणात्' इत्यसभ्याख्यातशाकुन्तले ॥ एष वः श्लाघ्य इति ॥ ९ ॥ 'वधूवराणां पितरो मिथःसम्बन्धिनो मता' इत्यगस्त्यः । जनकानां राज्ञाम्। उद्वहतीत्युद्वह कुलस्य उद्वहः श्रेष्ठ । 'उद्वह श्रेष्ठधुर्ययो' इति यादवः। ब्रह्मणः तत्त्वस्य पारायणं उपदेशम्। जगौ चकार इति लाक्षणिकोऽर्थ । 'पारायण तदुपदेश पारायणं' इति पदमाला । व्यधादिति च पाठ ॥९॥ कथमेष स महाराजस्य हृदयनिर्विशेषो वत्साया मे वध्वा *पिता राजर्षि सीरध्वज । हा धिक् हा धिक् स्मारितास्मि अनिर्वेदरमणीयान्* दिवसान्। हा दैव सर्वमेव तन्नास्ति ॥ यया पूतंमन्य इति ॥ १० ॥ यथा

---

१ 'हिअआणन्दो' ( हृदयानन्द ) क-घ-च. २ 'संभाविदह्मि मणुवहिरमहूसवे दिअहे' ( सम्भावितास्म्यनुमस्मिन्महोत्सवे दिवसे ) च-छ.

यया पूतंमन्यो निधिरपि पवित्रस्य महसः
पतिस्ते पूर्वेषामपि खलु गुरूणां गुरुतमः ।
त्रिलोकीमङ्गल्यामवनितलँलीनेन शिरसा
जगद्वन्द्यां देवीमुषसमिव वन्दे भगवतीम् ॥ १० ॥

अरुन्धती—अँक्षरं ते ज्योतिः प्रकाशताम् । स त्वां पुनातु देवः परो रँजसां य एष तपति ।

जनकः—आर्य गृष्टे अप्यनामयमस्याः प्रजापालकस्य मातुः ।

कञ्चुकी—( स्वगतम् ) निरवशेषमतिनिष्ठुरमुपालब्धाः स्मः । ( प्रकाशम् ) राजर्षे अनेनैव मन्युना चिरपरित्यक्तरामभद्रमुखचन्द्रदर्शना नार्हसि दु खयितुमतिदुःखितां देवीम् । रामभद्रस्यापि दैवदुर्योगः कोऽपि । यत्किल समन्ततः प्रवृत्तबीभत्सकिंवदन्तीकाः पौरजानपदा नाग्निशुद्धिमनँल्पकाः प्रतियन्तीति दारुणमनुष्ठितं देवेन ।

जनकः—( सरोषम् ) आः कोऽयमग्निर्नामास्मत्प्रसूतिपरिशोधने । कष्टमेवंवादिना जनेन रामभद्रपरिभूता अपि वयं पुनः परिभूयामहे ।

अरुन्धती—( निश्वस्य । ) एवमेतत् । अग्निरिति वत्सां प्रति परिलघून्यक्षराणि । सीतेत्येव पर्याप्तम् । हा वत्से

शिशुर्वा शिष्या वा यदसि मम तत्तिष्ठतु तथा
विशुद्धेरुत्कर्षस्त्वयि तु मम भक्तिं द्रढयति ।

---

भवत्या तपसा च । आत्मानं पूतं मन्यते पूतंमन्यः । महसः ब्रह्मवर्चसस्य दीप्तेश्च । ते तव पतिः वसिष्ठः । अतिशयेन विशेषेण गुरुः गुरुतमः । त्रिलोक्याः मङ्गले साधुः मङ्गल्या तां भगवतीं त्वामित्यर्थः । 'स्त्रीनपुंसकयोरुप' इति लिङ्गनिर्णयः । श्लोकोऽयं यथाकथंचिदुप पक्षेऽप्युन्नेय ॥ १० ॥ अक्षरं क्षरादिभिन्नम्, ज्योतिः सूर्यं । भङ्ग्यन्तरेणाह स इति । रजसां रजोगुणानाम् परः शत्रु उपलक्षणमेतत् । तमसा चेति भाव । तथा च दूरतः परिशेषात् सत्त्वैकनिष्ठ इति फलितोऽर्थः । प्रजापालकस्य मातुरस्या इत्यन्वय । मृषापवादकल्पकप्रजापालक इति परिहासोक्ति । निरवशेषं निःशेषं अतिनिष्ठुरं च यथा तथा । मन्युना कोपेन । दैवदुर्योगः महपीडा । अत एव 'तदा तु दैवं लिप्येरन्नलरामयुधिष्ठिरा' इति पौराणिका । प्रतीतिं विश्वासविषयां कुर्वन्तीत्यर्थ । दारुणं कर्म इति शेषः । परित्याग इति यावत् । परि-

१ 'माङ्गल्याम्' न-क. २ 'लोकेन' घ-घ. ३ 'पर' घ-घ ४ 'परोरजा.' वं-घ ५ 'अपि कुशलम्' घ-घ. ६ 'अल्पका' घ-घ. ७ 'जनयति' घ-घ.

शिशुत्वं स्त्रैणं वा भवतु ननु वन्द्यासि जगतां
गुणाः पूजास्थानं गुणिषु न च लिङ्गं न च वयः ॥ ११ ॥

कौसल्या—अहो उम्मीलन्ति विअ वेअणाओ। अहो उन्मीलन्तीव वेदना। ( इति मूर्छति )

जनकः—हा कष्टं किमेतत्।

अरुन्धती—राजर्षे किमन्यत्।

स राजा तत्सौख्यं स च शिशुजनस्ते च दिवसाः
स्मृतावाविर्भूतं त्वयि सुहृदि दृष्टे तदखिलम्।
विपाके घोरेऽस्मिन्नथ खलु विमूढा तव सखी
पुरंध्रीणां चित्तं कुसुमसुकुमारं हि भवति ॥ १२ ॥

जनकः—हन्त हन्त सर्वथा नृशंसोऽस्मि संवृत्तः। यच्चिरस्य दृष्टान्प्रियसुहृदः प्रियदारान्न स्निग्धं पश्यामि।

स सम्बन्धी श्लाघ्यः प्रियसुहृदसौ तच्च हृदयं
स चानन्दः साक्षादपि च निखिलं जीवितफलम्।
शरीरं जीवो वा यदधिकमतोऽन्यत्प्रियतरं
महाराजः श्रीमान्किमिव मम नासीद्दशरथः ॥ १३ ॥

---

भूताः सहसा परित्यागेनेति भावः ॥ शिशुर्वा शिष्या वेति ॥११॥ तथा दूरे इत्यर्थः। विशुद्धेरुत्कर्षः कर्ता। त्वयि विषये। 'भक्तिश्च निश्चय' इति त्रिकाण्डी। स्त्रैणं स्त्रीत्वम्। 'स्त्रैणं स्याद्भाववृन्दयोः' इति कपिलः। स्थानं आस्पदम्। गुणिनि गुणभाजि प्राणिनि। इदं सप्तमी सीता प्रति सम्बोधनं च। लिङ्गं स्त्रीपुंनपुंसकम्। वयः इति 'तेजसा हि न वयस्समीक्ष्यते' इत्यस्य च्छायानुकरणमेतत् ॥ ११ ॥ अहो उन्मीलन्तीव वेदना ॥ स राजा तदिति ॥ १२ ॥ राजा दशरथः। आविर्भूतं चित्तारूढमिति यावत्। पुरन्ध्रीणां कुटुम्बिनीनाम् ॥ १२ ॥ 'चिरस्याय्यचिरार्थका' इत्यमरः। स सम्बन्धी श्लाघ्य इति ॥ १३ ॥ सुहृदः दशरथस्य असौ कौसल्या। साक्षात् प्रत्यक्ष। निखिलमिदमिति शेषः। जीवः असुधारणम्। अत जीवादपीत्यर्थः। महाराजः इति प्रथमैकवचनम्। किमिव नासीत् पूर्वोक्तं सर्वम-

---

१ 'अहतः' घ. २ 'समुम्मूलअन्तीव' (समुन्मूलयन्तीव) न. ३ 'अस्मिन्न खलु न विमूढा' न, 'अस्मिन्नु खलु' च–घ. ४ 'दारानस्निग्ध इव' न. ५ 'प्रियतम.' च–घ.

कष्टमियमेव सा कौसल्या ।

यदस्याः पत्युर्वा रहसि परमं दूषितमभू-
दभूवं दम्पत्योः पृथगहमुपालम्भविषयः ।
प्रसादे कोपे वा तदनु मदधीनो विधिरभू-
दलं वा तत्स्मृत्वा दहति यदवस्कन्द्य हृदयम् ॥ १४ ॥

अरुन्धती—हा कष्टम् । अतिचिरनिरुद्धनिःश्वासनिष्पन्दं हृदयमस्याः ।

जनकः—हा प्रियसखि । ( इति कमण्डलूदकेन सिञ्चति । )

कञ्चुकी—सुहृदिव प्रकटय्य सुखप्रदः -
प्रथममेकरसामनुकूलताम् ।
पुनरकाण्डविवर्तनदारुणो
विधिरहो विशिनष्टि मनोरुजम् ॥ १५ ॥

कौसल्या—( आश्वस्य ) हा वच्छे जाणइ कहिं सि । सुमरामि दे णव-विवाहलच्छीपरिग्गहेक्कमण्डणं पप्फुरन्तमुद्धसिहमिदं मुद्धमुहपुण्डरीअं ।

---

प्यासीदेवेत्यर्थः ॥ १३ ॥ यदस्याः पत्युर्वेति ॥ १४ ॥ अस्याः पत्युर्वेति ज्ञेयम् । परमं अधिकम् दूषितं प्रणयकलहः । उपालम्भस्य गर्हणायाः । विधिः समाधानप्रकारः मदधीनः ममायत्तः तत् चरितमिति शेषः । य-च्चरितं कर्तृ, अवस्कन्द्य अभिनिपत्य ॥ १४ ॥ हा कष्टमिति खेदातिशये । 'हा कष्टमस्मिन् जने' इत्यस्मद्व्याख्यातभोजचम्पौ । चिरनिरुद्धः निश्वासस्य निष्पन्दः निर्गमः यस्मिन् ॥ सुहृदिव प्रकटय्येति ॥ १५ ॥ प्रथमं आदौ । एकः मुख्यः रसः अभिनिवेशः प्रीतिर्वा यस्याम् । अनुकूलतां सर्वशुभानुकूल्यम् । प्रकटय्य प्रकटीकृत्य । पुनः पश्चात् । अकाण्डे अकाले अनुकूलतायाः निवर्तने प्रतिकूलतापादनविषये दारुणः । विशिनष्टि परिशिष्टां करोतीति यावत् । विधिर्दैवम् । 'पुनः पश्चात्' इति समासनि-घण्टुः ॥ १५ ॥ वत्से जानकि कासि कासि । स्मरामि ते नवविवाहलक्ष्मी-परिग्रहैकमङ्गलं चटुलमुग्धपुण्डरीकम् । अर्हत्कौमुदीचन्द्रचन्द्रिकासुन्दरैरङ्गैः पुनरप्युद्द्योतयोत्सङ्गम् । सर्वथा महाराज एवं भणति, एषा रघुकुलमहत्तराणां वधूरस्माकं पुनर्जनक ( सुता ) दुहितैव । पुण्डरीकमिति कथनपुरुषेच्छायोग्य-वयस्सूचकम् । 'यौवने पुरुषेच्छायां विरहे चाङ्गपाण्डिमा' इति सार्वभौमः । अत एव 'पाण्डि( म ? )निमग्नं वपुः' इति अस्मद्व्याख्यातविद्धसालभञ्जिका-

---

१ 'निःश्वासनिष्ठुर' घ–ध. २ 'सुखप्रदाम्' न. ३ 'परिशिनष्टि विधिर्मनसो रुजम्' न.

आप्फुरन्तचन्दचन्दिआसुन्दरेहिं अङ्गेहिं पुणो वि मे जादे उज्जोएहि उच्छङ्गम्। सव्वदा महाराओ भणादि। एसा रहुउलमहत्तराणं वहू अह्माणं दु वणअसुदा दुहिदेव्व। हा वच्छे जानकि कुनालि। स्मरामि ते नवविवाहलक्ष्मीपरिग्रहलम्बन्धं प्रस्फुरच्चन्द्रविहसित मुग्धमुखपुण्डरीकम्। आस्फुरच्चन्द्रचन्द्रिकासुन्दरैरङ्गै पुनरपि मे जाते उद्द्योतयोत्सङ्गम्। सर्वदा महाराजो भणति एषा रघुकुलमहत्तराणां वधूरस्माकं तु जनकसुता दुहितैव।

कञ्चुकी—यथाह देवी।

> पञ्चप्रसूतेरपि तस्य राज्ञः
> प्रियो विशेषेण सुबाहुशत्रुः।
> वधूचतुष्केऽपि यथैव शान्ता
> प्रिया तनूजास्य तथैव सीता ॥ १६ ॥

याम्। अर्हन्त्यः पूज्या अभिनन्दनीया या कौमुदीचन्द्रचन्द्रिकाः तद्वत् सुन्दरैः शोभनीयैः, 'पूर्णिमायामथुमन्थानजनी कौमुदी मता। दोषाद्रम्या या ज्योत्स्ना सा चन्द्रिकोच्यते॥' इति साहित्यमण्डने श्रीनाथः। चन्द्र कर्पूर। एतेन विविधपरिमलाङ्गी नायिकेय सूचिता। 'सा नानाविधगन्धिनी' इति पद्मिनीप्रकरणे। पाटलगन्धीलानप्रपदे क्षेत्रियस्य। मध्ये चन्द्रपदनिवेश घोरणीसन्दर्भाय। च( न्दि )आ इति कवे प्रमाद। 'चन्द्रिकाया अ' इति विशेषानुशासनेन चन्दिमा इति वक्तव्यस्य माधीयस्त्वात्। 'चन्दिमासुन्दरेहिं' इत्यविचारितरमणीय पाठ। पौनरुक्त्यासङ्गतिक्रोडीकृतत्वात्। महत्तराणां पूर्वेषाम्। वधूः स्नुषा। अस्मिन् घटे केचिद्बुधा कूपपतिता इव रज्ज(टी)त्कटुदा कण्ठशोषातिशयमभिनयन्तीति दिक्॥ दुहितृत्वं समर्थयते पञ्चप्रसूतेरपीति॥ १६॥ पञ्च प्रसूतय प्रसवा यस्य सीतया सहेति भाव॥ 'औरसो मानित क्रीत. पोषित स्थापितोऽर्थित'। गृहीतो विधिनेत्याद्य सद्भिरुक्ता प्रसूतय॥' इति पुराणवृत्ते। पञ्चप्रसूते विस्तृतप्रसवस्येति चार्थ। 'विस्तारे पञ्चशब्दः स्यात्तस्याभेदे प्रतारणे। व्यक्तौ च' इति धनञ्जयः॥ सुबाहुशत्रुः राम। वधूचतुष्के स्नुषाचतुष्टयेऽपि,'चतुष्क च चतुष्टयम्' इति द्विरूप। यथा शान्तैव मान्या तथैवास्य दशरथस्य सीतैवेति परामृश्यते। प्रिया तनूजा दुहितेत्यर्थ। तथा च दशरथस्य पुत्रेषु यथा राम प्रिय तथा स्नुषासु मान्या

१ 'णाअमहत्ती दुहिदेआ णेम' घ-प. २ 'यथा हि' च, 'तथैव नान्या' न.
३ 'यथैव' न

जनकः—हा प्रियसख महाराज दशरथ एवमसि सर्वप्रकारहृदयङ्गमः। कथं विस्मर्यसे।

कन्यायाः किल पूजयन्ति पितरो जामातुराप्तं जनं

…पा।

त्वं कालेन तथाविधोऽप्यपहृतः सम्बन्धबीजं च त-

द्घोरेऽस्मिन्मम जीवलोकनरके पापस्य धिग्जीवितम् ॥१७॥

कौसल्या—जादे जाणइ किं करोमि। दिढवज्जलेवपडिबद्धणिच्चलं हद-जीविदं मं मन्दभाइणीं ण परिच्चअदि। जाते जानकि किं करोमि। दृढवज्र-लेपप्रतिबद्धनिश्चलं हतजीवितं मां मन्दभागिनीं न परित्यजति।

अरुन्धती—आश्वसिहि राजपुत्रि बाष्पविश्रामोऽप्यन्तरे कर्तव्य एव। अन्यच्च किं न स्मरसि यद्वोचदृष्यशृङ्गाश्रमे युष्माकं कुलगुरुर्भवितव्यं तथे-त्युपजातमेव किं तु कल्याणोदर्कं भविष्यतीति।

कौसल्या—कुदो अदिक्कन्दमणोरहाए मह एदं। कुतोऽतिक्रान्तमनोर-थाया ममैतत्।

अरुन्धती—तत्किं मन्यसे राजपुत्रि मृषोद्यं तदिति। न हीदं क्षत्रि-येऽन्यथा मन्तव्यम्। भवितव्यमेव तेन।

---

सीता। पद्यप्रभूतेरित्यत्र पद्यशब्दार्थद्वयचमत्कारेण पद्मिन्यायपरत्वेन च प्रिया दुहितेवेति भावः। अत्र पद्ये बहवो भ्रमन्ति, शिष्यगुणग्राहिणः प्रमाणम्॥१६॥ कन्यायाः किल पूजयन्तीति॥ १७॥ सम्बन्धे आवयोरिति शेषः। तत् पूजनम्। विपरीतं व्यत्यस्तमेव। कथमित्यत आह—अभूदिति। आराधनं त्वत्कर्तृकं पूजनम्। मयि अभूत्। बीजं कारणं च अपहृतमि-त्यर्थः। तत् प्रसिद्धं सीतेत्यर्थः। बीजमिति ध्वनिः। तत् तस्मात्। घोरे इति चतुर्थचरणेनान्वयो योज्यः। जीवलोक एव नरकः॥ १७॥ जाते जानकि किं करोमि। दृढवज्रलेपपरिबद्धमिव निश्चलं हतजीवितं मां मन्दभागिनीं (न) परित्यजति। विश्रामः विरतिः। अन्तरा मध्ये। कल्याणं उदर्कः यस्मिन् तत्। भवितव्यमित्यस्यानुषङ्गः। 'उदर्कः फलमुत्तरम्' इत्यमरः। कुतोऽतिक्रा-

---

१ 'विधोऽप्यपहृत' न-घ. २ 'लेवपडिबद्धणिच्चल' क-घ-च. ३ 'कुलगुरुस्तदुपजातमेव' च-घ. ४ 'भअवदि अदिक्कन्दो मणोरहो' (भगवति, अतिक्रान्तो मनोरथः) घ-घ. ५ इद नास्ति न-क-पुस्तकयोः.

आविर्भूतज्योतिषां ब्राह्मणानां
ये व्याहारास्तेषु मा संशयोऽभूत् ।
भद्रा ह्येषां वाचि लक्ष्मीर्निषिक्ता
नैते वाचं विप्लुतार्थां वदन्ति ॥ १८ ॥

( नेपथ्ये कलकलः । सर्वे आकर्णयन्ति ।)

जनकः—अये अथ खलु शिष्टानध्ययन इत्यस्खलितं खेलतां बटूनां कलकलः ।

कौसल्या—सुलहसोक्खं दाव बालत्तणं होदि । ( निरूप्य ।) अम्महे एदाणं मज्झे को एसो रामभद्दस्स कोमारलच्छीसरिसेहिं सावट्टम्भेहिं मुद्धललिदेहिं अङ्गेहिं अम्हाणं लोअणाइं सीअलावेदि । [सुलभसौख्यं तावद् बालत्वं भवति । अहो एतेषां मध्ये क एष रामभद्रस्य कौमारलक्ष्मीसदृशैः सावष्टम्भैर्मुग्धललितैरङ्गैरस्माकं लोचनानि शीतलयति ।]

अरुन्धती—( अपवार्य सहर्षबाष्पम् ।) इदं नाम तद्भागीरथीनिवेदितरहस्य कर्णामृतम् । न त्वेवं विद्मः कतरोऽयमायुष्मतोः कुशलवयोरिति । ( प्रकाशम् ।)

---

न्तमनोरथाया ममैतद् । 'क्षत्रिया क्षत्रियाण्यपि' इत्यमरः ॥ आविर्भूतज्योतिषामिति ॥ १८ ॥ आविर्भूतं ज्योतिः परं ब्रह्म येषु येभ्यो वा । व्याहाराः उक्तयः । भद्रा शुभा । लक्ष्मीर्मङ्गलदेवतेत्युपलक्षणम् । सर्वदेवता इति सिद्धान्तः । 'अपि वा जीवितं जह्याम्' इति रामः । 'विप्रप्रसादाद्धरणीधरोऽहम्' इति, 'विजितेयं मही कृत्स्ना ब्राह्मणानां प्रसादतः ।' इति च कृष्णः । 'मूलं कृष्णो ब्रह्मणो ब्राह्मणाश्च' इति महाभारते । 'स मन्त्रो ब्राह्मणाधीनः' इत्यागमेषु । 'एता एव देवता' इति श्रुतिश्च । इति दिक् ॥ निषिक्ता नियतं यथा तथा स्थितेत्यर्थः । अनेन स्वतःसिद्धेति विभाव्यते । विप्लुतः निरस्तः शब्दस्यार्थः फलपरिणामः यस्याम् ॥ १७ ॥ न विद्यते अध्ययनं यस्मिन् । अस्खलितं अकुण्ठितं यथा तथा । सुलभसौख्यमिदानीं बालत्वं भवति । अम्महे एतेषां मध्ये क एष रामभद्रस्य कौमारलक्ष्मीसदृशैः सावष्टम्भैः मुग्धललितैरङ्गैर्दारकोऽस्माकं लोचनानि शीतलयति ॥ 'अवष्टम्भस्तु संस्थानवि-

---

१ 'विप्लुता व्याहरन्ति' ख–घ. २ 'शिष्टानध्याय.' क–घ. ३ 'उद्धतं' क-घ-च. ४ 'निवेदितं रहस्यकर्णामृतम्' ग.

कुवलयदलस्निग्धश्यामः शिखण्डकमण्डनो
वटुपरिषदं पुण्यश्रीकः श्रियेव सभाजयन्।
पुनरपि शिशुर्भूतो वत्सः स मे रघुनन्दनो
झटिति कुरुते दृष्टः कोऽयं दृशोरमृताञ्जनम् ॥ १९ ॥

कञ्चुकी—नून क्षत्रियब्रह्मचारी दारकोऽयमिति मन्ये।

जनकः—एवमेतत्। तथा हि

चूडाचुम्बितकङ्कपत्रमभितस्तूणीद्वयं पृष्ठतो
भस्मस्तोकपवित्रलाञ्छनमुरो धत्ते त्वचं रौरवीम्।
मौर्व्या मेखलया नियन्त्रितमधोवासश्च माञ्जिष्ठकं
पाणौ कार्मुकमक्षसूत्रवलयं दण्डोऽपरः पैप्पलः ॥ २० ॥

भगवत्यरुन्धति किमुत्प्रेक्षसे कुतस्त्योऽयमिति।

अरुन्धती—अद्यैवागता वयम्।

जनकः—आर्य गृष्टे अतीव मे कौतुक वर्तते तद्भगवन्तं वाल्मीकिमेव गत्वा पृच्छ। इमं च वालकं ब्रूहि। वत्स केप्येते प्रवयसस्त्वां दिदृक्षव इति।

कञ्चुकी—यदाज्ञापयति देव.। ( इति निष्क्रान्त ।)

कौसल्या—किं भणेध एव्वं भणिदो आअमिस्सदित्ति। किं मन्यध्वे एवं भणित आगमिष्यतीति।

जनकः—भिंद्येत वा सद्वृत्तमीदृशस्य निर्माणस्य।

---

शेषे गर्वतोपयो' इति समास.। मुग्धललितैः मनोज्ञविलासै। सहर्षेति—लावण्यदर्शनेन हर्षं प्राप्य ( ? ) कपोलश्च इत्युत्कण्ठा॥ कुवलयदलस्निग्ध इति ॥ १९ ॥ स्निग्धः मसृणः। श्रिया शोभया। सभाजयन् आनन्दयन्। अमृतमयाञ्जनम् ॥ १९ ॥ चूडाचुम्बितकङ्कपत्रमिति ॥२०॥ चूडा मौलिः चुम्बित. स्पृष्ट यैस्ते चूडाचुम्बिताः तादृश. कङ्कपत्रा. बाणा. यस्मिन्। 'अभितः पार्श्वयो' इति नन्दी। भस्म भसितं स्तोकः अल्पधारा पवित्रः व्याघ्रनख' ताभ्या लाञ्छितं 'उभयं बटुरक्षकम्' इत्यनुभवसिद्धम्। 'पवित्रं स्यात्कुसि व्याघ्रनखे' इति धनञ्जयः। रुरु कृष्णसार तत्सबन्धिनी रौरवीं उत्तरीयार्थमिति भाव.। मेखलया च 'रशना च मेखला' इति पद्ममाला। 'पीतमाञ्जिष्ठौ' इति कपिल। पैप्पलः पिप्पलसबन्धी 'क्षत्रियाणां तु पैप्पल'

---

१ 'श्रियैव' न. २ 'भूत्वा' न. ३ 'स्तोम' व. ४ 'भिद्यते' न.

कौसल्या—( निरूप्य । ) कहं सविणअणिसामिदणिद्धवअणो णिसज्जिदहमिदारओ इतोऽहिमुहं पत्थिदो जेव्व सो वच्छो । कथं सविनयनिशामितस्निग्धवचनो निसर्जितार्भदारक इतोभिमुखं प्रस्थित एव स वत्सः ।

जनकः—( चिरं निर्वर्ण्य । ) भोः किमप्येतत् ।

महिम्नामेतस्मिन्विनयशिशुतामौग्ध्यमसृणो
विदग्धैर्निर्ग्राह्यो न पुनरविदग्धैरतिशयः ।
मनो मे संमोहस्थिरमपि हरत्येष बलवा-
नयोधातुं यद्वत्परिलघुरयस्कान्तशकलः ॥ २१ ॥

लवः—( प्रविश्य । ) अज्ञातनामक्रमाभिजनान्पूज्यानपि न. स्वतः कथमभिवादयिष्ये । ( विचिन्त्य । ) अयं पुनरविरुद्धः प्रकार इति वृद्धेभ्यः श्रूयते । ( सविनयमुपसृत्य । ) एष वो लवस्य शिरसा प्रणामपर्यायः ।

अरुन्धतीजनकौ—कल्याणिन् आयुष्मान्भूयाः ।

कौसल्या—जाद चिरं जीव । जात चिरं जीव ।

अरुन्धती—एहि वत्स । ( लवमुत्सङ्गे गृहीत्वात्मगतम् । ) दिष्ट्या न केवलमुत्सङ्गश्चिरान्मनोरथोऽपि मे सम्पूर्णः ।

कौसल्या—जाद इदो वि दाव एहि । ( उत्सङ्गे गृहीत्वा । ) अम्महे ण केवलं दरविअसन्तणीलुप्पलसामलुज्जलेण देहबन्धेण कअलिदारविन्दकेसरकसाअकण्ठकलहंसघोसघग्घरघोसघग्घरेण सरेण अ रामभद्दं अणुहरदि । जं कठो-

---

ति स्मृते ॥ २० ॥ प्रवयसः वृद्धाः । किमन्यैः । एव भणित आगमिष्यतीति । वृत्तं चरितम् । कथं सविनयनिशामितस्निग्धवचन निसर्जिताशेषऋषिदारकः इतोभिमुखं प्रस्थित एव वत्सः । दारकाः बटवः । प्रस्थितः प्रचलितः । निर्वर्ण्य दृष्ट्वा । भो इति मनः प्रति सम्बोधनम् ॥ महिम्नामेतस्मिन्निति ॥ २१ ॥ एतस्मिन् वटे ( बटौ ? ) शिशिरे कुमारक इति यावत् । मौग्ध्येन सौन्दर्येण । मसृणः स्निग्धः । विदग्धैः चतुरैः । नितरां ग्राह्यः निग्राह्यः वेद्य । अविदग्धैः अचतुरैः, न वेद्य इत्यर्थः । महिम्नामतिशयः । किं तत आह—मन इति कर्म । 'प्रेमावेशे च संमोहः' इति धरणिः । अयोधातुं लोहधातुम् । परिलघुः सूक्ष्मः । शकलः खण्डः । 'यद्वत्तद्वद्यथा तथा' इति त्रिकाण्डशेषः । 'अयस्कान्तमणिशलाकेव लोहधातुम्' इति बाणनिर्वचनच्छायानुसरणमेतत् ॥ २१ ॥ अज्ञातानि नाम-

---

१ 'णिसज्जिदासेसइसिदारओ' न. २ 'शिशिर.' न. ३ 'संमोह. स्थिर°' घ-प.

रकमलगब्भपम्हलो सरीरप्फंसो वि तारिसो जेव्व वच्छस्स । जाद पेक्खामि दाव दे मुहपुण्डरीअं । ( चिबुकमुन्नमय्य निरूप्य सबाष्पाकूतम् । ) राएसि किं ण पेक्खसि णिउणं णिरूवअन्तं से मुहं वच्छाए वहूए मुहचन्देण संवददि जेव्व । जात इतोऽपि तावदेहि । अहो न केवलं दरविकसन्नीलोत्पलश्यामलोज्ज्वलेन देहबन्धेन कवलितारविन्दकेसरकषायकण्ठकलहंसनिनाददीर्घदीर्घेण स्वरेण च रामभद्रमनुहरति । ननु कठोरकमलगर्भपक्ष्मल शरीरस्पर्शोऽपि तादृश एव वत्सस्य । जात प्रेक्षे तावत्ते मुखपुण्डरीकम् । राजर्षे किं न प्रेक्षसे निपुणं निरूप्यमाणमस्य मुखं वत्साया वध्वा मुखचन्द्रेण संवदत्येव ।

जनकः—पश्यामि सखि पश्यामि ।

कौसल्या—अम्महे उम्मत्तीभूदं विअ मे हिअअं किंपि एदोमुहं विलवदि । अहो उन्मत्तीभूतमिव मे हृदयं किमपीतोमुखं विलपति ।

जनकः—

वत्सायाश्च रघूद्वहस्य च शिशावस्मिन्नभिव्यज्यते
संपूर्णप्रतिबिम्बितेव निखिला सैवाकृतिः सा द्युतिः ।[1]
सा वाणी विनयः स एव सहजः पुण्यानुभावोऽप्यसौ
हा हा दैवं किमुत्पथैर्मम मनः पारिप्लवं धावति ॥ २२ ॥

कौसल्या—जाद अत्थि दे मादा सुमरसि वा तादं । जात अस्ति ते माता स्मरसि वा तातम् ।

लवः—नहि नहि ।

कौसल्या—तदो कस्स तुमं । ततः कस्य त्वम् ।

लवः—भगवतो वाल्मीकेः ।

कौसल्या—अयि जाद कहिदव्वं कहेहि । अयि जात कथयितव्यं कथय ।

---

क्रमाभिजातानि यैः येषां च परस्परमित्यर्थः । क्रमः परम्परा । 'आभिजात्यं तु वंशे च' इति लिङ्गानुशासनम् । प्रकारः विध्यन्तरम् । 'पर्यायोऽवसरे क्रमः' इत्यमरः ॥ जात चिरं जीव । जात इतोऽपि तावदेहि । अम्महे न केवलं दरनिसृष्टनीलोत्पलश्यामलोज्ज्वलेन देहबन्धेन कवलितारविन्दकेसरकषायकण्ठकलहंसघोषेण घर्घरानुनादनिर्भरदीर्घतरेण स्वरेण रामभद्रमनुसरति । क-

---

१ 'संवृत्तिः प्रति' न. २ 'देवि' न.

लवः—एतावदेव जानामि।

(नेपथ्ये) भो भोः सैनिकाः। एष खलु कुमारश्चन्द्रकेतुराज्ञापयति न केनचिदाश्रमाभ्यर्णभूमय आक्रमितव्या इति।

अरुन्धतीजनकौ—अये मेध्याश्वरक्षाप्रसङ्गादुपागतो वत्सश्चन्द्रकेतुरद्य द्रष्टव्य इत्यहो सुदिवसः।

कौसल्या—वच्छलक्खणस्स पुत्तओ आणवेदित्ति अमिदबिन्दुसुन्दराइं अक्खराइं सुणीअन्दि। (वत्सलक्ष्मणस्य पुत्रक आज्ञापयतीत्यमृतबिन्दुसुन्दराण्यक्षराणि श्रूयन्ते।)

लवः—आर्य क एष चन्द्रकेतुर्नाम।

जनकः—जानासि रामलक्ष्मणौ दाशरथी।

लवः—एतावेव रामायणकथापुरुषौ।

जनकः—अथ किम्।

लवः—तत्कथं न जानामि।

जनकः—तस्य लक्ष्मणस्यायमात्मजश्चन्द्रकेतुः।

लवः—ऊर्मिलायाः पुत्रस्तर्हि मैथिलस्य राजर्षेर्दौहित्रः।

अरुन्धती—(विहस्य।) आविष्कृतं कथाप्रावीण्यं वत्सेन।

जनकः—(विचिन्त्य।) यदि त्वमीदृशः कथायामभिज्ञस्तद्ब्रूहि तावत्पृच्छामस्तेषां दशरथात्मजानां कियन्ति किंनामधेयान्यपत्यानि केषु केषु दारेषु प्रसूतानीति।

लवः—नायं कथाप्रविभागोऽस्माभिरन्येन वा श्रुतपूर्वः।

जनकः—किं न प्रणीत एव कविना।

लवः—प्रणीतो न प्रकाशितः। तस्यैव कोऽप्येकदेशः सन्दर्भान्तरेण[1] रसवानभिनेयार्थः कृतः। तं च स्वहस्तलिखितं मुनिर्भगवान्व्यसृजद्भगवतो भरतस्य मुनेस्तौर्यत्रिकसूत्रकारस्य।

जनकः—किमर्थम्।

लवः—स किल भगवान्भरतस्तमप्सरोभिः प्रयोजयिष्यतीति।

जनकः—सर्वमिदमाकूतवरमस्माकम्[2]।

---

१ 'प्रबन्धान्तरेण' न. २ 'आकूतकरम्' घ-घ.

लवः—महती पुनस्तस्मिन्भगवतो वाल्मीकेरास्था। यतः केषांचिदन्तेवासिनां हस्तेन तद्पुस्तकं भरताश्रमं प्रति प्रेषितम्। तेषामनुयात्रिकश्चापपाणिः प्रमादापनोदनार्थमस्मद्भ्राता प्रेषितः[1]।

कौसल्या—जाद भादावि दे अत्थि। जात भ्रातापि तेऽस्ति।

लवः—अस्त्यार्यः कुशो नाम।

कौसल्या—जेट्ठोत्ति भणिदं होदि। ज्येष्ठ इति भणितं भवति।

लवः—एवमेतत्। प्रसवक्रमेण[2] स किल ज्यायान्[3]।

जनकः—किं यमजावायुष्मन्तौ।

लवः—अथ किम्।

जनकः—वत्स कथय कथाप्रबन्धस्य कीदृशः पर्यन्तः।

लवः—अलीकपौरापवादोद्विग्नेन[4] राज्ञा निर्वासितां देवीं देवयजनसम्भवां सीतामासन्नप्रसववेदनामेकाकिनीमरण्ये लक्ष्मणः परित्यज्य प्रतिनिवृत्त इति।

कौसल्या—हा वच्छे मुद्धचन्दमुहि को दाणिं दे सरीरकुसुमस्स झत्ति देव्वदुव्विलासपरिणामो एकलिआए निवडिदो। हा वत्से मुग्धचन्द्रमुखि क इदानीं ते शरीरकुसुमस्य झटिति दैवदुर्विलासपरिणाम एकाकिन्या निपतितः।

---

टोर कमलगर्भपक्ष्मल शिशिरस्पर्शोऽपि सादृश इति शेषः। तं एकदेशम्। आतङ्क पीडा। तस्मिन् भरताचार्ये। आस्था अभिनिवेश प्रीतिर्वा। अमीषां दृश्यमानानामिति ध्वनि। आश्रमं उद्दिश्येति शेषः। आश्रमं प्रतीति वा पाठ। अनुयात्रिकः अनुप्रस्थानदक्ष। भ्राताऽपि तेऽस्ति। आर्यपदस्वारस्यादाह—जेट्ठ इति। ज्येष्ठ इति गणितं (भणित ?) भवति। 'ज्येष्ठस्तु मासभेदेच पूर्वजे च' इति नन्दी। मासभेदे तु ज्येष्ठ एवेति केचित्। तन्, निर्ज्येष्ठमित्यत्र विरोधात्। अत एव ज्येष्ठो ज्येष्ठश्चेति द्विरूपेभिधानात्। मासभेदे ज्येष्ठोऽपीति नन्दार्जुनो व्याचख्यारेति दिक्॥ 'परिपाटिरनुक्रम' इत्यमर। प्रसवक्रमात्, 'अनुज. पूर्वजो ज्येष्ठस्त्वनुजो यमलौ यमौ' इति वस्तुनिर्णयः। कथायाः चरितस्य। प्रबन्धः गु(म्फ)नम्। 'प्रबन्धो गुम्फने मन्थे' इति शब्दमाला। पर्यन्तः पूर्ति॥ हा वत्से मुग्धचन्द्रमुखि क इदानीं ते कुसुमभूतस्य शरीरस्य झटिति दैवदुर्विलासपरिणाम एकाकिन्या निपतित। 'एकल्लिआ' इति

---

१ 'प्रमादच्छेदनार्थम्' न; 'अप्रमादार्थम्' घ. २ '°प्रसवस°' न. ३ 'ज्येष्ठः' न. ४ 'पौरापवादोद्विग्नेन' ख-घ.

जनकः—हा वत्से

नूनं त्वया परिभवं च वनं च घोरं
तां च व्यथां प्रसवकालकृतामवाप्य ।
क्रव्याद्गणेषु परितः परिवारयत्सु
संत्रस्तया शरणमित्यसकृत्स्मृतोऽस्मि ॥ २३ ॥

लवः—( अरुन्धतीं प्रति ) आर्ये कावेतौ ।

अरुन्धती—इयं कौसल्या । अयं च जनकः ।

लवः—( सबहुमानखेदकौतुकं पश्यति ।)

जनकः—अहो निर्दयता दुरात्मनां पौराणाम् । अहो रामस्य राज्ञः क्षिप्रकारिता ।

एतद्वैशसवज्रघोरपतनं शश्वन्ममोत्पश्यतः
क्रोधस्य ज्वलितुं झटित्यवसरश्चापेन शापेन वा ।

कौसल्या—( सभयकम्पम् ) भअवदि परित्ताहि परित्ताहि । पसादेहि कुविदं राएसिम् । भगवति परित्रायस्व परित्रायस्व । प्रसादय कुपितं राजर्षिम् ।

लवः—एतद्धि परिभूतानां प्रायश्चित्तं मनस्विनाम् ।

अरुन्धती—राजन्नपत्यं रामस्ते पाल्याश्च कृपणा जनाः ॥२५॥

---

देशीयशब्दः । 'एकन्नी' इति महाराष्ट्राः । नूनं त्वया परिभवमिति ॥ २३ ॥ परिभवं परित्यागरूपतिरस्कारम् । क्रव्याद्गणेषु मांसाशनसङ्घेषु । बहुसमाधिकम् । कालेति ध्वनिः ॥ २३ ॥ कथाप्रविष्टाविति बहुमानः । कथं दीनाविति खेदः । दैवतस्थानीति कौतुकम् । क्षिप्रेति अविचार्य शीघ्रकारितेति यावत् ॥ एतद्वैशसवज्रघोरमिति ॥ २४ ॥ वैशसमेव वज्रं तस्य । घोरपतनं दारुणपातः । 'अप्रिये द्रोहे त्वपवादे च वैशसम्' इति सारस्वतः । शश्वत् मुहु । उत्पश्यतः उत्प्रेक्षमाणस्य । विचारयत इति यावत् । मम क्रोधस्य चापेन शापेन वा करणेन झटिति ज्वलितुमवसरः समयः ॥ भगवति परित्रायस्व । प्रसादय कुपितं राजर्षिम् ॥ एतद्धि परिभूतानामिति ॥ २५ ॥ एतत् प्रदानमित्यर्थः । अपत्यं पुत्रः । यथा दशरथस्य सीता दुहिता तथा तव रामः पुत्र

---

१ 'नव' व-घ. २ 'स्मृतोऽहन्' न. ३ 'दुर्मर्षोदता' व-घ. ४ 'एनी-लव०' क-घ-च ५ एतदरुन्धतीवाक्य च-घ-पुस्तकयो .

जनकः—शान्तं वा रघुनन्दने तदुभयं यत्पुत्रभाण्डं हि मे
भूयिष्ठद्विजबालवृद्धविकलस्त्रैणश्च पौरो जनः॥ २५ ॥

( प्रविश्य । ) संभ्रान्ता बटवः—कुमार कुमार अश्वोऽश्व इति कोऽपि भूतविशेषो जनपदेष्वनुश्रूयते सोऽयमधुनास्माभिः प्रत्यक्षीकृतः ।

लवः—अश्व इति पशुसमाम्नाये साङ्ग्रामिके च पठ्यते । तद्ब्रूत कीदृशः ।

बटवः—श्रूयताम् ।

पश्चात्पुच्छं वहति विपुलं तच्च धूनोत्यजस्रं
दीर्घग्रीवः स भवति खुरास्तस्य चत्वार एव ।
शष्पाण्यत्ति प्रकिरति शकृत्पिण्डकानाम्रमात्रा-
न्किं वाऽऽख्यातैर्व्रजति स पुनर्दूरमेह्येहि यामः॥ २६॥

( इत्यजिने हस्तयोश्चाकर्षन्ति । )

लवः—( सकौतुकापराधविनयम् । ) आर्याः पश्यत पश्यत । एभिर्नीतोऽस्मि । ( इति त्वरितं परिक्रामति । )

अरुन्धतीजनकौ—पूरयतु कौतुकं वत्स ।

कौसल्या—अरण्णगब्भरूवालावेहिं तुह्मे तोसिदा अह्मे अ । भअवदि

---

इति भाव । 'कृपण. क्षुद्र.' इत्यमर. ॥ २५ ॥ शान्तं गतमिति यावत् । क्षान्तमिति च पाठः । न दधे न दधामि । यत् यस्मात् । तत् प्रसिद्धम् । उभयं सीतारामौ । मे मम । पुत्री च पुत्रश्च पुत्रौ तावेव भाण्डं पुत्रभाण्डम् । 'भाण्डं मूलवणिग्धने' इति कपिलः । वणिजा मूलधनं यथा रक्ष्यते तथा मया सीतारामौ रक्षणीयौ इति भाव । ननु अपवादवत्स्वेषु जनेषु कोपो युक्त इत्याशङ्क्य सोऽपि दयनीय इत्यत्र हेतुमाह—भूयिष्ठेति । भूयिष्ठानि भूयांसि द्विजबालवृद्धविकलस्त्रैणानि यस्मिन् । विकला. अङ्गहीनादयः । 'स्त्रैण स्त्रीसमूहः' इति नन्दी ॥ २४ ॥ पशुसमाम्नाये पशुविधायकवेदे । साङ्ग्रामिके सङ्ग्रामसंबन्धिनि प्रकरणे इति शेषः । पश्चात्पुच्छं वहतीति ॥ २६ ॥ धूनोति कम्पयति । शष्पाणि बालतृणानि । आम्रमात्रान् आम्रप्रमाणान् । शकृत्पिण्डकान् मलगोलकान् ॥ २६ ॥ अश्वदर्शने कौतुकम्, सहसागमनप्रसक्तोऽपराधः तत्क्षमापने वा सहजो वा विनय । एव सर्वतो यथोचितमूह्यम् ॥ एभिर्नीतोऽस्मीति छिद्मत्कारेण संचमत्कारकथनाल्लवस्य गमने महानभिनिवेश इति बोध्यम् ॥ अरण्यगर्भा-

---

१ 'तत्पुत्र°' ख-घ. २ 'ध्यास्यानै.' न. ३ 'महत्कौतुकं वत्सस्य' न. ४ 'अरण्ण...अह्मे अ' एतन्नास्ति क-घ-ग-पुस्तकेषु.

जाणामि एदं अणालोअअन्ती वञ्चिदा विअ ता अण्णदो भविअ पेक्खह्म दाव पलाअन्तं दीहाउम्। अरण्यगर्भरूपालापैर्यूयं तोषिता वयं च । भगवति जानाम्येतमनालोकयन्ती वञ्चितेव । तदन्यतो भूत्वा प्रेक्षामहे तावत्पलायमानं दीर्घायुषम् ।

अरुन्धती—अतिजवेन दूरमतिक्रान्तः स चपलः कथं दृश्यते ।

( प्रविश्य । ) कञ्चुकी—भगवान्वाल्मीकिराह ज्ञातव्यमेतदवसरे भवद्भिरिति ।

जनकः—अतिगम्भीरमेतत्किमपि। भगवत्यरुन्धति सखि कौसल्ये आर्ये गृष्टे स्वयमेव गत्वा भगवन्तं प्राचेतसं पश्यामः ।

( इति निष्क्रान्तो वृद्धवर्गः )

( प्रविश्य । ) बटवः—पश्यतु कुमारस्तदाश्चर्यम् ।

लवः—दृष्टमवगतं च । नूनमाश्वमेधिकोऽयमश्वः ।

बटवः—कथं ज्ञायते ।

लवः—ननु मूर्खाः पठितमेव हि युष्माभिरपि तत्काण्डम् । किं न पश्यथ प्रत्येकं शतसंख्याः कवचिनो दण्डिनो निषङ्गिणश्च रक्षितारः, तत्प्रायमेव बलमिदं दृश्यते । यदीह न प्रत्ययस्तद्गत्वा पृच्छत ।

बटवः—भो भोः किंप्रयोजनोऽयमश्वः परिवृतः पर्यटति ।

लवः—( सस्पृहमात्मगतम् । ) अये अश्वमेध इति नाम विश्वविजयिनां क्षत्रियाणामूर्जस्वलः सर्वक्षत्रपरिभावी महानुत्कर्षनिकषः ।

---

( भरूपा ? ) लापैर्यूयं तोषिताः, वयं च सन्तोषिताः विस्मिताश्च । भगवति जानामि एतमनवेक्षमाणा वञ्चितेव तस्मादन्यतो भूत्वा पश्यामस्तावत्तं पलायमानं दीर्घायुषम् । अरण्यगर्भस्य वनमध्यस्य रूपं शोभा येन यस्माद्वा सोऽरण्यगर्भरूपो लवः । तस्य लापैः उक्तिभिरित्यर्थः । 'अनृतं बालभाषितम्' इति स्मरणात् । 'रूपमाकृतिसौन्दर्यशोभासु' इति समारावर्नः । एतं लवम् । कञ्चुकीति—पूर्वं जनकेन वाल्मीकिं प्रति प्रेषितो यः स एवायमिति ज्ञेयम् । आह वदति । तदिति लवस्य वृत्तमिति विवेकः । अवसर एव ज्ञातव्यम्, न त्विदानीमिति भावः । किमपीति क्रमेण विशदीभविष्यतीति वाक्यशेषः । शतं संख्या येषां निषङ्गिणः तूणीधराः । तत्प्रायमिति । तेषां कवचिप्रमुखानां प्रायः भूमा यस्मिन् तत् तत्प्रायम् । 'प्रायो भूम्नि' इत्यमरः । इदं रक्षकसैन्यमिति यावत् । किं प्रयोजनं यस्य किंप्र-

---

१ 'तत्काण्डे' क-ध-व. २ 'तत्प्रायमेवान्यदपि' व. ३ 'निष्कर्ष.' क-ध-व.

( नेपथ्ये । ) योऽयमश्वः पताकेयमथवा वीरघोषणा ।
सप्तलोकैकवीरस्य दशकण्ठकुलद्विषः ॥ २७ ॥

लवः—( सगर्वमिव । ) अहो सन्दीपनान्यक्षराणि ।

बटवः—किमुच्यते । प्राज्ञः खलु कुमारः ।

लवः—भो भोः, तत्किमक्षत्रिया पृथिवी यदेवमुद्घोष्यते ।

( नेपथ्ये । ) रे रे महाराजं प्रति कुतः क्षत्रियाः ।

लवः—धिग्जाल्मान् ।

यदि ते सन्ति सन्त्येव केयमद्य विभीषिका ।
किमुक्तैरेभिरधुना तां पताकां हरामि वः ॥ २८ ॥

भो भो बटवः परिवृत्य लोष्टैरभिघ्नन्तो नयतैनमश्वम् । एष रोहितानां मध्ये वराकश्चरतु ।

( प्रविश्य सक्रोधदर्पं )पुरुषः—धिक्चापलं किमुक्तवानसि । तीक्ष्णतरा ह्यायुधीयश्रेणयः शिशोरपि दृप्तां वाचं न सहन्ते । राजपुत्रश्चन्द्रकेतुर्दुर्दान्तः । सोऽप्यपूर्वारण्यदर्शनाक्षिप्तहृदयो न यावदायाति तावत्त्वरितमनेन तरुगहनेनापसर्पत ।

बटवः—कुमार कृतमनेनाश्वेन । तर्जयन्ति विस्फुरितशस्त्राः कुमारमायुधीयश्रेणयः । दूरे चाश्रमपदमितस्तदेहि हरिणप्लुतैः पलायामहे ।

---

योजनः । स्पृहा समरेच्छा । ऊर्जस्वलः ऊर्जोतिशयान्वितः । सर्वे स्वसादितरे च ते क्षत्रियाः । निकषः शाण, घर्षणसाधनशिला । 'राज्ञाम्' इति महाराष्ट्राः । योऽयमश्वः पताकेति ॥ २७ ॥ योऽश्वः अयं इयमिति वीरघोषणाया च योज्यम् । 'वीरवादाभटी वीरघोषणा' इति हैमः । अधो विद्यमाना सप्तलोकाः ऊर्ध्वं च सप्त लोका आहृत्य चतुर्दशभुवनानीति भाव ॥ २७ ॥ सन्दीपनानि सन्तापकारीणि इति यावत् । 'हीनसंबोधने तु रे' इत्यमर । 'भयोत्पादनहेतुर्या प्रतिमा सा विभीषिका' इति केदार । अभिघ्नन्तः पशुसाधारणमिति भाव । रोहितानां मृगशीर्षाणाम् । पृष्ठत मध्ये वा । वराकः अधम । पुरुष राक्षससैन्यस्थ इति बोध्यम् । आयुधीयानां शस्त्राजीवानाम् । 'श्रेणिः श्रेणी' इति द्विरूप. ।

---

१ 'अयमश्व' क–घ–व. २ 'सव्यथमिव' घ–घ. ३ 'नो' न. ४ 'केयमन्या' घ–व. ५ 'किमुक्तै. सनिपत्यैव' घ, 'किमुक्तै. शरसम्बाधाम्' घ. ६ 'नीरम्ना.' क–घ–घ. ७ 'मायुध' न. ८ 'अरिविमर्दन' क–घ–घ. ९ 'सौम्यपूर्वारण्य०' व–घ. १० 'विस्फारितशरासना' न.

लवः—( विहस्य ) किं नाम विस्फुरन्ति शस्त्राणि । ( इति धनुरारोपयन् । )

> ज्याजिह्वया वलयितोत्कटकोटिदंष्ट्र-
> मुद्गारिघोरघनघर्घरघोषमेतत् ।
> ग्रासप्रसक्तहसदन्तकवक्त्रयन्त्र-
> जृम्भाविडम्बि विकटोदरमस्तु चापम् ॥ २९ ॥

( इति यथोचितं परिक्रम्य निष्क्रान्ताः सर्वे ।)

चतुर्थोऽङ्कः ।

---

'दुर्दान्त( न्त ? )प्रचण्डविक्रम ' इति हेमचन्द्रः । न परापतति नाभिवर्तते । 'तरभिगहने कलिले वने' इति ध्वनिमञ्जरी । स्फुतः उद्दीनविशेषे शस्त्राणि आयुधानि । करुणरसातिशयेन चिरादतिसंकोचं वहन् कवि प्रकरणवशादेव वीररसाङ्कुरमुद्भावयति—ज्याजिह्वया वलयितेति ॥ २९ ॥ ज्यैव जिह्वा तया वलयिते आवेष्टिते उत्कटे मत्ते कोटी अग्रे एव दंष्ट्रे यस्य । उद्गा( द्गा ? )री उदयन् घोरः भयङ्करः घनः सान्द्रः घर्घरः घोषः यस्य । गम्भीरे घर्घर इति भावः । विकटं कुटिलं दुर्भरमिति यावत् । उदरं अन्तरालं यस्य । एतत् चापम् । 'धन्वकार्मुकचापानि' इति जयः । ग्रासे जगत्कवलने प्रसक्तः तत्परः । हसन् अट्टहासं कुर्वन् यः अन्तकः तस्य वक्त्रमेव यन्त्रं विभीषिकाजनकम् तस्य जृम्भां वा विडम्बयतीति विडम्बि । 'जृम्भसु निगु' इत्यमरः । अस्तु । तथा च एतेषामायुधीयानां सर्वविष्फारः मम ईदृशस्य चापस्य पुरतः कियानिति भावः इत्यलमतिविस्तरेण ॥ २९ ॥ इति महाराजपद + उत्तररामचरितमनोरमनाट्यपदटिप्पणे चतुर्थोऽङ्कः समाप्तः ॥

॥ इति चतुर्थोऽङ्कः ॥

---

१ 'उद्गारि' न. + प्रथमाङ्कटीकान्तगतो ग्रन्थांशः यथास्थानं निवेशितुं न प्राप्यते।

## पञ्चमोऽङ्कः ।

( नेपथ्ये । ) भो भो सैनिका जातं जातमवलम्बनमस्माकम् ।

नन्वेष त्वरितसुमन्त्रनुद्यमान-
प्रोद्वेल्लत्प्रजवितवाजिना रथेन ।
उत्खातप्रचलितकोविदारकेतुः
श्रुत्वा नः प्रधनमुपैति चन्द्रकेतुः ॥ १ ॥

( ततः प्रविशति सुमन्त्रसारथिना रथेन धनुष्पाणिः साद्भुतहर्षसंभ्रमश्चन्द्रकेतुः )

चन्द्रकेतुः —आर्य सुमन्त्र पश्य पश्य ।

किरति कलितकिंचित्कोपरज्यन्मुखश्री-
रविरतगुणगुञ्जत्कोटिना कार्मुकेण ।
समरशिरसि चञ्चत्पञ्चचूडश्चमूना-
मुपरि शरतुषारं कोऽप्ययं वीरपोतः ॥ २ ॥

---

अथ कविरिह पञ्चमाङ्के लवचन्द्रकेतुसंवादं वर्णयिष्यन् शाकुन्तलादिकतिपयाङ्कस्थलवत् कथागाढ्यन्याभावात्प्रवेशादिकमङ्गमन्तरेणैव चतुर्थाङ्कपूर्तिसमङ्गलवसमारम्भसङ्गतिमनुसन्नेव तदनुरूपं, 'साक्षात्पात्रप्रवेशो वा नेपथ्याकाशभाषितैः' इति रूपकादर्शोक्तन्यायानुसारेण चन्द्रकेतुप्रवेशसूचनमङ्कुरयति—नेपथ्ये इति । अस्माकमिति अस्मत्सेनाया इति च पाठौ साधीयांसौ । अस्मत्सैनिकानामिति भ्रान्तः पाठः । भो भो सैनिका इति संबोधनासङ्गतेः ॥ कथमवलम्बनमित्याशङ्क्याह—नन्वेष त्वरितेति ॥ १ ॥ सुमन्त्रेण नुद्यमानः प्रेर्यमाणः । प्रोद्वेल्लन् कम्पमानः प्रकर्षेण जविताः संजातजवा वाजिनः यस्य । तथा च नुद्यमानस्सन् प्रोद्वेल्लश्चासौ प्रजवितवाजी च तेन रथेन उपलक्षितः । उत्खाते प्रचलितः तरलितः कोविदार एव केतुः ध्वजः यस्य । 'उत्खाते विषमे देशे' इति 'कोविदारे चमरकः' इति शब्दमालाधन्वन्तरी । सपदि झटिति । 'बाले च युवराजे च कुमारः' इति ससारावर्तः । पूर्वार्धे यमकभङ्ग एकाक्षरप्रासः ॥ १ ॥ सुमन्त्रः सारथिः यस्मिन् ॥ किरति कलितकिञ्चिदिति ॥ २ ॥ कलितः प्राप्तश्चासौ किञ्चित्कोपः अल्पक्रोधः तेन रज्यन्ती मुखश्रीः यस्य । प्रवितत: गुणः मौर्वी यस्य । घण्टाभिर्गुञ्जन्ती शब्दायमाना कोटिः यस्य । प्रवि-

---

१ 'व्यावल्गत्प्रजवन' क-घ-व, 'प्रोद्वलात्' न. २ 'उद्धात' क-घ-व.
३ 'अनवरतनिगुञ्जत्' घ-व, 'प्रवितत' टी.

माश्चर्यमाश्चर्यम्।

> मुनिजनशिशुरेकः सर्वतः सैन्यकाये
> नव इव रघुवंशस्याप्रसिद्धः प्ररोहः।
> दलितकरिकपोलग्रन्थिटङ्कारघोर-
> ज्वलितशरसहस्रः कौतुकं मे करोति ॥ ३ ॥

सुमन्त्रः—आयुष्मन्

> अतिशयितसुरासुरप्रभावं
> शिशुमवलोक्य तथैव तुल्यरूपम्।
> कुशिकसुतमखद्विषां प्रमाथे
> धृतधनुषं रघुनन्दनं स्मरामि ॥ ४ ॥

चन्द्रकेतुः—मम खेकमुद्दिश्य भूयसामारम्भ इति हृदयमपत्रपते।

> अयं हि शिशुरेकको मदभरेण भूरिस्फुर-
> त्करालकरकन्दलीजटिलशस्त्रजालैर्बलैः।

---

ततगुणं च तत् गुणकोटि च। चञ्चन्त्यः चपला पञ्च चूडाः संयतकेशाः यस्य। 'चचत्पटे चेतुनि' इति मूकः। शरा एव तुषाराः नीहारा। वीरस्य पोतः अर्भक। वीरधासौ वा। सप्रकोपादिलिव उपसर्गौ पादपूरकौ इति केचित्। वृथेत्यन्ये। हन्त कोपादिति वा पाठ ॥ २ ॥ मुनिजनशिशुरिति ॥ ३ ॥ प्ररोहः अङ्कुरः। दलिता भेदिता करिकपोलग्रन्थय यै। 'ग्रन्थिर्मर्मणि च' इति हैम। टङ्कारा घोरा येषु। दलितकरिकपोलग्रन्थय एव टङ्कारघोराः सन्त। ज्वलिताश्च ते शराश्च तेषाम् ॥ ३ ॥ अतिशयितसुरासुरेति ॥ ४ ॥ अतिशयितः सुरासुरेभ्योऽपि प्रभावः यस्य। तथैव रामस्येति भाव। द्विषां मारीचादीनाम्। प्रमाथे हिंसने ॥ ४ ॥ अयं हि शिशुरिति ॥ ५ ॥ एककः एक। भूरिस्फुरन्त्यः वीरलक्ष्म्या भृश शोभमानाः करालाः दुष्प्रेक्षाः याः करकन्दल्यः करसंपुटानि तेषु जटिलानि निबिडानि शस्त्राणां आयुधानां जालानि समूहा येषाम्। 'दुर्दर्शे कराल' इति, 'कदली संपुटे पुटे कन्दः' इति, 'जटिलो निबिडार्थे' इति हारावलीकपिलशब्दार्णवा। किङ्किणीभिः

---

१ 'सप्रकोपात्' न–टी. २ '°प्रसिद्धिमरोह.' न. ३ '°घोर' घ. ४ 'तथैव' घ–ध. ५ 'ममैव°' घ–घ. ६ 'समरभारभूमि°' क–घ–घ. ७ 'कलित' क–घ–ध.

क्वणत्कनककिङ्किणीझणझणायितस्यन्दनै-
रमन्दमददुर्दिनद्विरदडामरैरावृतः ॥ ५ ॥

सुमन्त्र.—वत्स एभि. समस्तैरपि किमस्य किं पुनर्व्यस्तैः ।

चन्द्रकेतु.—आर्य त्वर्यतां त्वर्यताम् । अनेन हि महानाश्रितजनप्रमारोऽस्माकमारब्धः । तथा हि ।

आगर्जद्गिरिकुञ्जकुञ्जरघटानिस्तीर्णकर्णज्वरं
ज्यानिर्घोषममन्ददुन्दुभिरवैराध्मातमुज्जृम्भयन् ।
वेल्लद्भैरवरुण्डमुण्डनिकरैर्वीरो विधत्ते भुवं
तृप्यत्कालकरालवक्त्रविघसव्याकीर्यमाणामिव ॥ ६ ॥

सुमन्त्र.—( स्वगतम् । ) कथमीदृशेन सह वत्सस्य चन्द्रकेतोर्द्वन्द्वसंप्रहारमनुजानीम । ( विचिन्त्य । ) अथवा इक्ष्वाकुकुलवृद्धा. खलु वयम् । प्रत्युपस्थिते रणे च का गतिः ।

चन्द्रकेतु.—( सविस्मयलज्जासंभ्रमम् । ) हन्त धिक् । अपावृत्तान्येव सर्वतः सैन्यानि मम ।

---

क्षुद्रघण्टाभि घणघणायिताः स्यन्दनाः रथा येषाम् । अमन्दं महत् । मदा एव दुर्दिनं येषा ते च ते द्विरदाः गजा तै डामराणि उद्धतानि । दुर्दिनमिति नैरन्तर्यधाराक्षरणात्मकार्थद्वयाभिप्रायकम् । 'मेघच्छन्नेऽह्नि दुर्दिनम्' इति, 'उद्धते डामर त्रिषु' इत्यमरविक्रमार्को । वलैः सैन्यै. । 'तुल्यबुद्धौ समभर' इति नन्दी । आवृतः आक्रान्त । सादिनोऽप्येतदन्तर्भूता इति भाव । शिञ्जरेरेति ध्वनि ॥ ५ ॥ समस्तैर्मिलितै· । व्यस्तैः भिन्नै । एभि. वलै । आश्रितजनाः अनुचरलोका तेषां प्रमारः प्रकर्षेण मारणम् ॥ आगर्जद्गिरीति ॥ ६ ॥ आ समन्तात् । घटासु निस्तीर्णः अवतीर्णः । कर्णेभ्य. ज्वरः असह्यत्वरूप संताप येन । विस्तीर्ण इति पाठे विशाल इत्यर्थ । आध्मातं पूरितम् । वेल्लदिति । 'प्रेङ्खद्दारणदण्डानां अवयन्ध शिरोदण्डम्' इति समास । तृप्यन् य कालः यम तस्य करालवक्त्रस्य विघसेन । 'करालो दन्तुरे तुङ्गे' इति, 'विघसो भोजनशेषः' इत्यमरकेदारौ ॥ ६ ॥ संप्रहारं युद्ध । केति रण कर्तव्यमेवेति भावः । लवस्य पराक्रमातिशयाद्विस्मयलज्जासंभ्रमा । अपावृत्तानि परावृत्तानि ।

---

१ 'वारिदै.' क-घ-ब. २ 'प्रमाथ' क-घ-ब. ३ 'आगुञ्जद्' घ-ध. ४ 'विस्तीर्णं' घ-ध. ५ 'ज्वरज्या०' न. ६ 'राण्ड' न. ७ 'भुव' घ-ध. ८ 'तृप्यद्' न-क.

सुमन्त्रः—( रथवेगमभिनीय । ) आयुष्मन्, एष ते वाग्विषयीभूतः स वीरः ।

चन्द्रकेतुः—( विस्मृतिमभिनीय । ) आर्य किमस्य नामधेयमाख्यात-माह्वायकैः ।

सुमन्त्रः—लव इति ।

चन्द्रकेतुः—भो भो लव महाबाहो किमेभिस्तव सैनिकैः ।
　　एषोऽहमेहि मामेव तेजस्तेजसि शाम्यतु ॥ ७ ॥

सुमन्त्रः—कुमार पश्य पश्य ।
　　विनिवर्तित एष वीरपोतः
　　　पृतनानिर्मथनात्त्वयोपहूतः ।
　　स्तनयित्नुरवादिभावलीना-
　　　मवमर्दादिव दृप्तसिंहशावः ॥ ८ ॥

( ततः प्रविशति धीरोद्धतपराक्रमो लवः । )

लवः—साधु राजपुत्र साधु । सत्यमैक्ष्वाकः खल्वसि । तदहं परागत एवास्मि ।

( नेपथ्ये महान्कलकलः । )

लवः—( सावष्टम्भं परावृत्य । ) आः कथमिदानीं भग्ना अपि प्रतिनि-वृत्य युद्धाभिसारिण पर्यवष्टम्भयन्ति मां चमूपतयः । धिग् जाल्मान् ।

　　अयं शैलाघातक्षुभितवडवावक्त्रहुतभु-
　　　क्प्रचण्डक्रोधार्चिर्निचयकवलत्वं व्रजतु मे ।
　　समन्तादुत्सर्पन्धनतुमुलहेलाकलकलः
　　　पयोराशेरोघः प्रलयपवनास्फालित इव ॥ ९ ॥

( सवेगं परिक्रामति । )

चन्द्रकेतुः—भो भो कुमार ।

---

वागिति-सप्तमी सत्यापाय सन्निकृष्ट इत्यर्थः । इतिकार आवा(वो?)चक इति निकाण्डी ॥ विनिवर्तित एष इति ॥ ८ ॥ पृतना सेना । स्तनयित्नुः मेघः । अवमर्दः मर्दनम् । शावः शिशुः ॥ ८ ॥ परागतः प्रतिनिवृत्तागत इति यावत् । 'अवष्टम्भो गर्वः' इति रत्नमाला । परित स्थिरीभवतीति यावत् । मामुद्दिश्य । 'जाल्मोऽसमीक्ष्यकारी' इत्यमरः । अयं शैलाघात इति ॥९॥ आघातः आघट्टनम् । तेन क्षुभिता या वडवा, 'अश्वा वडवा' इत्य-

---

१ 'आरपायकैः' व-घ. २ 'व्यवस्तंत' व-प. ३ 'दल' व-घ. ४ 'सेना' क-घ.

अत्यद्भुतादसि गुणातिशयात्प्रियो मे
तस्मात्सखा त्वमसि यन्मम तत्तवैव ।
तत्किं निजे परिजने कदनं करोपि
नन्वेप दर्पनिकपस्तव चन्द्रकेतुः ॥ १० ॥

लवः—( सहर्पसंभ्रमं परावृत्य । ) अहो महानुभावस्य प्रसन्नकर्कशा वीरवचनप्रयुक्तिर्विकर्तनकुलकुमारस्य । तत्किमेभिरेनमेव सावरसम्भावयामि । ( पुनर्नेपथ्ये कलकलः । )

लवः—( सक्रोधनिर्वेदम् । ) आः कदर्थितोऽहमेभिर्वीरसंवादविप्रकारिभि. पापैः । ( तदभिमुख परिक्रामति । )

चन्द्रकेतुः—आर्य आर्य दृश्यतां द्रष्टव्यमेतत् ।
दर्पेण कौतुकवता मयि बद्धलक्ष्यः
पश्चाद्बलैरनुसृतोऽयमुदीर्णधन्वा ।
द्वेधा समुद्धतमरुत्तरलस्य धत्ते
मेघस्य माघवतचापधरस्य लक्ष्मीम् ॥ ११ ॥

सुमन्त्रः—कुमार एवैनं द्रष्टुमपि जानाति । वयं तु केवलं परवन्तो विस्मयेन ।

चन्द्रकेतु.—भो भो राजानः ।
संख्यातीतैर्द्विरदतुरगस्यन्दनस्थै. पदाता-
यत्रैकस्मिन्कवचनिचितैर्मध्येचर्मोत्तरीये ।
कालज्येष्ठैरभिनववयःकाम्यकाये भवद्भि-
र्योऽयं बद्धो युधि समभरस्तेन धिग्वो धिगस्मान् ॥ १२ ॥

लवः—( सोन्माथम् । ) आः कथमनुकम्पते नाम । ( विचिन्त्य ।) भवतु । कालहरणप्रतिषेधाय जृम्भकास्त्रेण तावत्सैन्यानि संस्तम्भयामि । ( इति ध्यानं नाटयति । )

---

मर । निचय. समूह । 'अतुलं ( तुमुल? ) रणसङ्कुले' इति, 'हेला विलास ' इति, 'ओघ प्रवाहजवयो ' इति चामर । आस्फालितः उद्धून' ॥ ९ ॥ अत्यद्भुतादसीति ॥ १० ॥ कदनं व्यापादनम् ॥ १० ॥ कदर्थित व्यर्थीकृत इति यावत् ॥ दर्पेण कौतुकवतेति ॥ ११ ॥ उदीर्णं उद्धृतम् । माघवतं ऐन्द्रम् । लक्ष्मीं शोभाम् ॥ ११ ॥ परवन्तः पराधीना । संख्यातीतैरिति ॥ १२ ॥ 'पदाता पदातय.' इत्यमर । तत्र तस्मिन् लवे । निचितैः । 'कालो वत्सरेऽपि' इति केशव । अपरं बाल्यं । तेन

---

१ 'नद' न. २ 'अपरवयसि व्यातिरामैः' न. ३ 'परिकर.' इति क–घ–च.

सुमन्त्रः—तत्किमकस्मादुत्सैन्यघोषः प्रशाम्यति ।

लवः—पश्याम्येनमधुना प्रगल्भम् ।

सुमन्त्रः—( ससंभ्रमम् । ) वत्स मन्ये कुमारकेणानेन जृम्भकास्त्रमामन्त्रितमिति ।

चन्द्रकेतुः—अत्र कः सन्देहः ।

> व्यतिकर इव भीमस्तामसो वैद्युतश्च
> प्रणिहितमपि चक्षुर्ग्रस्तमुक्तं हिनस्ति ।
> अथ लिखितमिवैतत्सैन्यमस्पन्दमास्ते
> नियतमजितवीर्यं जृम्भते जृम्भकास्त्रम् ॥ १३ ॥

आश्चर्यमाश्चर्यम् ।

> पातालोदरकुञ्जपुञ्जिततमःश्यामैर्नभो जृम्भकै-
> रुत्तप्तस्फुरदारकूटकपिलज्योतिर्ज्वलद्दीप्तिभिः ।
> कल्पाक्षेपकठोरभैरवमरुद्व्यस्तैरवस्तीर्यते
> मीलन्मेघतडित्कडारकुहरैर्विन्ध्याद्रिकूटैरिव ॥ १४ ॥

सुमन्त्रः—कुतः पुनरस्य जृम्भकाणामागमः स्यात् ।

चन्द्रकेतुः—भगवतः प्राचेतसादिति मन्यामहे ।

सुमन्त्रः—वत्स नैतदेवमस्त्रेषु विशेषतो जृम्भकेषु । यतः ।

---

सम (म ?)रेण तुल्ययुद्धा ॥ १२ ॥ उन्मादः चित्तविभ्रम । कालहरणं विलम्बः । तस्य प्रतिषेधः निषेध । अकस्मात् अहेतो- । सहसा वा । एनं चन्द्रकेतुम् । परिहासोक्तिरियम् । तदेव स्पष्टयति—व्यतिकर इव भीम इति ॥ १३ ॥ भीमः घोर· तमसोऽयं तामसः । विद्युत- अयं वैद्युतः । व्यतिकरः सम्बन्धः । प्रणिहितं प्रनियानगतं विषयैकनिष्ठमपीति यावत् । चक्षुः कर्म । ग्रस्तमुक्तं तामसो व्यतिकरः ग्रस्तं सत् वने(?)त्सुमन्त्र शेष- । वैद्युतः मुक्तं सत् हिनस्ति वेति बोध्यम् । अस्पन्दं निश्चलम् । आस्ते तस्मादिति शेष ॥ १३ ॥ पातालोदरेति ॥ १४ ॥ पातालेति श्यामत्वातिशयद्योतकम् । जृम्भकैः जृम्भकास्त्रैः । पूजाया बहुत्वम् । 'रीतिः स्त्रियामारकूटं' इति, 'कडारः कपिल.' इति चामरः । आरकूटं 'पित्तळ' इति महाराष्ट्राः । ज्योतिर्वत् ज्वलन्ती दीप्तिः येषां तानि । कल्पः प्रलयः तस्य आक्षेपे आमहे । दारुणमरुता व्यस्तैः भिन्नैः । तडिद्भिः कडाराणि कुहराणि बिलानि येषां ते । कूटैः शिखरैरिव । अवस्तीर्यते

---

१ 'मलित' क. २ 'अभिस्तीर्यते' न; 'मवास्तीर्यते' घ.

कृशाश्वतनया ह्येते कृशाश्वात्कौशिकं गताः।
अथ तत्संप्रदायेन रामभद्रे स्थिता अपि ॥ १५ ॥

चन्द्रकेतुः—अपरेऽपि मैत्रीयमानसत्त्वप्रकाशाः स्वयं सर्वं मन्त्रदृशः पश्यन्ति।

सुमन्त्रः—वत्स सावधानो भव। परागतस्ते प्रतिवीरः।

कुमारौ—(अन्योन्यं प्रति।) अहो प्रियदर्शनः कुमारः। (सस्नेहानुरागं निर्वर्ण्य।)

यदृच्छासंवादः किमु किमु गुणानामतिशयः
पुराणो वा जन्मान्तरनिबिडबद्धः परिचयः।
निजो वा सम्बन्धः किमु विधिवशात्कोऽप्यविदितो
ममैतस्मिन्दृष्टे हृदयमवधानं रचयति ॥ १६ ॥

सुमन्त्रः—भूयसा जीविधर्म एष यद्रससमयी कस्यचित्क्वचित्प्रीतिः, यत्र लौकिकानामुपचारस्तारामैत्रकं चक्षूराग इति। तमप्रतिसंख्येयमनिबन्धनं प्रेमाणमामनन्ति।

---

आस्तीर्यते ॥ १४ ॥ आगमः प्राप्तिः। एते जृम्भकादयोऽस्त्रविशेषाः ॥ कृशाश्वतनया इति ॥ १५ ॥ कृशाश्वस्य कृपे। तस्मात् कौशिकात्। संप्रदायेन शिष्यक्रमेण। एकपदमेतत् ॥ १५ ॥ परं भृशम्। उपेति वर्धमानव्यत्साश्चर्ये(?) 'प्रकाशोऽतिप्रसिद्धेऽपि' इत्यमरः। 'ऋषियोगी च मन्त्रकृत्' इति लिङ्गानुशासनम्। स्वयं सर्वं पश्यन्ति। एतेन कृशाश्वकौशिकादिवत् प्राचेतसादीनामपि अस्त्रप्रवर्तकत्वप्रसक्तिरुक्ता भवतीत्यवधेयम्। ते तुभ्यम्। कुमारौ लवचन्द्रकेतू ॥ यदृच्छासंवाद इति ॥ १६ ॥ यदृच्छया स्वैरम् संवादः सल्लापः किमु। निजः नित्यः परिचयो वेति पूर्वेण योज्यम्। अविदितः सम्बन्धः किमु। कुत एवमत आह—ममेति। अवधानं अनन्यवृत्तित्वम्, कर्म। हृदयं परवशीभवतीति भावः ॥ १६ ॥ 'द्रवे रसः' इत्यमरः। प्रीतिरिति यत् एष धर्म इत्यन्वयः। यत्र प्रीतिविषये। लौकिकानां वैदिकमार्गानभिज्ञानाम्। उपचारः आदरणमात्रमित्यर्थः ॥ अथ वैदिकमर्थं विवृणोति—तारेति। तारैव तारका। 'तारकाक्ष्णः कनीनिका' इति 'मित्र मैत्री च सख्यं च' इत्यमरालङ्कारौ। चक्षुषोः रागः। न रागः उभयत्र दर्शनं लक्ष्यते। तत् प्रसिद्धम्। अप्रतिसन्धेयं अवचनीयम्। निबन्धनं शास्त्रम्।

---

१ 'भृशाश्व' न. २ 'परमोपचीयमान' घ-ष. ३ '०गत प्रवीर' क-घ-ष. ४ 'किमु गुणगणानाम्' न ५ 'बन्ध' घ-ष. ६ 'भूयसा जीविनामेव धर्म एष यत्र रससमयी' न. ७ 'व्याहारः' ष. ८ 'तदप्रतिसंख्येयनिबन्धनं प्रमाणम्' न

अहेतुः पक्षपातो यस्तस्य नास्ति प्रतिक्रिया ।
स हि स्नेहात्मकस्तन्तुरन्तर्भूतानि सीव्यति ॥ १७ ॥

कुमारौ—( अन्योन्यमुद्दिश्य । )

एतस्मिन्मसृणितराजपट्टकान्ते
मोक्तव्याः कथमिव सायकाः शरीरे ।
यत्प्राप्तौ मम परिरम्भणाभिलाषा-
दुन्मीलत्पुलककदम्बमङ्गमास्ते ॥ १८ ॥

किं त्वाक्रान्तकठोरतेजसि गतिः का नाम शस्त्रं विना
शस्त्रेणापि हि तेन किं न विषयो जायेत यस्येदृशः ।
किं वक्ष्यत्ययमेव युद्धविमुखं मामुद्यतेऽप्यायुधे
वीराणां समयो हि दारुणरसः स्नेहक्रमं बाधते ॥ १९ ॥

सुमन्त्रः—( स्वगतं निर्वर्ण्य सासमात्मगतम् । ) हृदय किमन्यथा परिप्लवसे ।

मनोरथस्य यद्बीजं तद्दैवेनादितो हृतम् ।
लतायां पूर्वलूनायां प्रसवस्योद्भवः कुतः ॥ २० ॥

चन्द्रकेतुः—अवतराम्यार्य सुमन्त्र स्यन्दनात् ।

---

प्रमाणमामनन्ति । वेदिता इति शेषः । 'प्रतिसन्धानमि(म[1])तिसन्धानं द्वे यंत्रणार्थके' इति रुद्रः ॥ अहेतुः पक्षपात इति ॥ १७ ॥ पक्षपातः ममता । मैथिलीपक्षपातेनेलक्ष्यवाल्मीकिवर्मा । प्रतिक्रिया आक्षेपः स पक्षपात प्रेमस्वरूपम् । सूनं कर्तृ । भूतानि प्राणि कर्म । अन्तः आत्मनि सीव्यति स्यूतान् करोतीत्यर्थः ॥ १७ ॥ एतस्मिन्मसृणितेति ॥ १८ ॥ मसृणितं च तत् राजपट्टाय साम्राज्याय कान्तं मनोज्ञं तस्मिन् । यस्य शरीरस्य । प्राप्तौ लाभे । उन्मीलत्पुलकानां कदम्बं समूहः यस्मिन् । उन्मीलन्ति पुलका एव कदम्बानि नीपपुष्पाणि यस्मिन्निति वा । 'अङ्गं वपुः प्रत्यवयवे' इति रत्नाकर. ॥ १८ ॥ ननु यथेच्छमालिङ्ग्यताम्, मास्तु शस्त्रयुद्धम्, अस्तु वा बाहुयुद्धम्, इत्याशङ्क्याह किं त्वाक्रान्तेति ॥ १९ ॥ किन्तु आक्रान्ताः अभिभूता कठोरतेजसः शूराः येन तस्मिन् त्वत्र इति यावत् । यस्य शस्त्रस्य यस्य मनेति वा शेषः । ईदृश इति षष्ठीप्रथमैकवचनम् । 'सन्केतपथाचारसिद्धान्ता समया' इति धनञ्जय. ॥ १९ ॥ परिप्लवसे चलसि ॥ मनोरथस्य यदिति ॥ २० ॥ बीजं सौविलस्य । प्रसवः फलानि ॥ २० ॥

---

१ 'अन्तर्मर्माणि' क-ख-ब. २ 'दम्बिकदम्बं' ख-घ-ब. ३ 'हृतम्' घ. ४ 'प्रसूनसागम.' ब-घ.

सुमन्त्र —तत्कस्य हेतोः ।

चन्द्रकेतु —एकैकस्तावदयं वीरपुरुषः पूजितो भवति । अपि च स-त्वार्यं क्षात्रधर्मः समनुगतो भवति । न रथिनः पादचारमभियुञ्जन्तीति शास्त्रविदः परिभाषन्ते ।

सुमन्त्र —( स्वगतम् । ) आः कष्टां दशामनुप्रपन्नोऽस्मि ।

कथं न्याय्यमनुष्ठानं मादृशः प्रतिषेधतु ।
कथं वाभ्यनुजानातु साहसैकरसां क्रियाम् ॥ २१ ॥

चन्द्रकेतु —यदा तातमिश्रा अपि पितुः प्रियसखसमर्थसहायेस्वार्यमेव पृच्छन्ति तत्किमार्यो विमृशति ।

सुमन्त्र —आयुष्मन्, एवं यथाधर्ममभिमन्यसे ।

एष सांग्रामिको न्याय एष धर्मः सनातनः ।
इयं हि रघुसिंहानां वीरचारित्रपद्धतिः ॥ २२ ॥

चन्द्रकेतु —अप्रतिरूपं वचनमार्यस्य ।

इतिहासं पुराणं च धर्मप्रवचनानि च ।
भवन्त एव जानन्ति रघूणां च कुलस्थितिम् ॥ २३ ॥

सुमन्त्र —( सस्नेहास्रं परिष्वज्य )

जातस्य ते पितुरपीन्द्रजितो निहन्तु-
र्वत्सस्य वत्स कति नाम दिनान्यमूनि ।
तस्याप्यपत्यमनुतिष्ठति वीरधर्मं
दिष्ट्या गतं दशरथस्य कुलं प्रतिष्ठाम् ॥ २४ ॥

---

पादाभ्यां चारः संचारः यस्य ॥ कथं हीदमनुष्ठानमिति ॥ २१ ॥ अनुष्ठानं आचरणम् । मादृशः अनभिज्ञ इति यावत् । प्रतीति समानयु द्धस्य न्याय्यत्वादिति भावः । रणमुखे यानादवतरणमेव साहसमिति भावः । अनुष्ठान क्रियामिति च ध्वनी । अत्र द्विकारावजागलस्तनौ ॥ २१ ॥ मिश्रा इत्यत्र पादा इति च पाठः । रामादय इत्यर्थः । पितुः दशरथस्य । विमृशति विचारयति । अनुरुध्यसे अनुवर्तसे ॥ एष सांग्रामिक इति ॥ २२ ॥ सनातनः नित्यः । 'चरित्रमपि चारित्रम्' इति द्विरूपः ॥ २२ ॥ अप्रतिरूपं असमानम् ॥ इतिहासं पुराणमिति ॥ २३ ॥ इतिहासं पुरावृत्तम् ॥ २३ ॥ जातस्य ते पितुरिति ॥ २४ ॥ तस्य लक्ष्मणस्य ।

---

१ 'एकस्तावत्' न, 'वत्सस्तावत्' घ-थ २ 'परिपालित' न; 'सम्यगनुगत' घ; 'अनुगृहीत' घ ३ 'कथं हीद' न ४ 'प्रतिरूप' घ-घ ५ 'निजेतुः' घ-घ ६ 'वृत्त' घ-घ

चन्द्रकेतुः—( सस्मितम् )

अप्रतिष्ठे रघुज्येष्ठे का प्रतिष्ठा कुलस्य नः ।
इति दुःखेन तप्यन्ते त्रयो नः पितरोऽपरे ॥ २५ ॥

सुमन्त्रः—अहह हृदयमर्मदारणान्येव चन्द्रकेतोर्वचनानि ।

लवः—हन्त मिश्रीकृतो रसक्रमो वर्तते ।

यथेन्द्रावानन्दं व्रजति समुपोढे कुमुदिनी
तथैवास्मिन्दृष्टिर्मम कलहकामः पुनरयम् ।
रणत्कारक्रूरक्वणितगुणगुञ्जद्गुरुधनु-
र्धृतप्रेमा बाहुर्विकचविकरालोल्वणरसः ॥ २६ ॥

चन्द्रकेतुः—( अवतरणं रूपयन् । ) आर्य सावित्रश्चन्द्रकेतुरभिवादयते ।

सुमन्त्रः—अर्हितस्यैव पराजयाय महानादिवराहः कल्पताम् ।

अपि च ।

---

अपत्यं चन्द्रकेतु । प्रतिष्ठां कीर्तिम् । गतमिति ध्वनि ॥ २४ ॥ अप्रतिष्ठे कुलज्येष्ठे इति ॥ २५ ॥ रघवः दशरथादय ज्येष्ठा यस्य । 'ज्येष्ठोऽतिशस्त.' इत्यमर । रघुभ्य भरतलक्ष्मणशत्रुघ्नेभ्य इति वाऽर्थ । रघुश्रेष्ठे इति च पाठ । अप्रतिष्ठे अपवादादिति भाव । तुर्यपादे ध्वनि ॥ २५ ॥ रसयो शान्तवीरयो । क्रमो रीति । शान्ति वर्णयति–यथेन्द्रावानन्दमिति ॥ २६ ॥ समुपोढे उदिते । अस्मिन् चन्द्रकेतौ । वीररस वर्णयति–कलहकाम इति । अयमसौ । रणत्कारः शब्दानुकार । तेन क्रूरं क्वणितं शब्द यस्य तादृग्गुण मौर्वी यस्य घण्टामाधनेन गुञ्जद् गुरु अलघु यत् धनुः गुणं च तद्धनु । तस्मिन् धृतप्रेमा । विकचाः स्फुटा विकरालाः विशेषेण भयङ्करा व्रणाः व्याघातसम्भवा मुखे तले यस्य । 'भागमध्यस्थयो सन्धिविशेषतलयोर्मुखम्' इति लिङ्गानुशासनम् । बाहु स्फुरतीति शेष ॥ २६ ॥ अर्हितस्य शत्रो एवकारेण लवो व्यावर्त्यते । तस्याहितत्वाभावादिति देवसिद्धं बोध्यम् । पराजयं भङ्गम् । महान् पूज्य । आदिवराहः वराहावतारो विष्णु ॥ 'दार्व्यमर्काच्छ्रियं शक्रात्सत्यं रामाद्धुरोर्मतिम् । पराजयमभि-

---

१ 'कुलज्येष्ठे' क–घ–न. २ 'मिश्रीकृतक्रमो रसो' न, 'रस.' घ. ३ 'विकरालक्रमामुख.' न–टी. ४ 'ऐक्ष्वाक' न. ५ अस्य स्थाने 'अजिन पुण्यमूर्तेरस्य ककुत्स्थस्येव ते महः । श्रेयसे शाश्वतो देवो वराह. परिकल्प्यताम्' ॥ २७ ॥ इति क–घ–च–पुस्तकेषु.

देवस्त्वां सविता धिनोतु समरे गोत्रस्य यस्ते पिता
त्वां मैत्रावरुणोऽभिनन्दतु गुरुर्यस्ते गुरूणामपि ।
ऐन्द्रावैष्णवमाग्निमारुतमथो सौपर्णमोजोस्तु ते
देयादेव च रामलक्ष्मणधनुर्ज्याघोषमन्त्रो जयम् ॥ २७ ॥

लवः—कुमार अति हि नाम शोभसे रथस्थ एव । कृतं कृतमत्यादरेण ।

चन्द्रकेतुः—तर्हि महाभागोऽप्यन्यं रथमलङ्करोतु ।

लवः—आर्य प्रत्यारोपय रथोपरि राजपुत्रम् ।

सुमन्त्रः—त्वमप्यनुरुध्यस्व चन्द्रकेतोर्वचनम् ।

लवः—को विचार स्वेषूपकरणेषु । किं त्वरण्यसदो वयमनभ्यस्तरथचर्याः ।

सुमन्त्रः—जानासि वत्स दर्पसौजन्ययोर्यथोचितमाचरितुम् । यदि पुनस्त्वामीदृशमैक्ष्वाको राजा रामभद्रः पश्येत्तदा तस्य स्नेहेन हृदयमभिष्यन्देत ।

लवः—आर्य सुजनः स राजर्षि श्रूयते । ( सलज्जमिव । )

---

त्राणा प्रार्थयेदादिकालत ॥' इति स्मरणात् ॥ देवस्त्वां सवितेति ॥ २७ ॥ धिनोति प्रीणयतीति माठरः । मैत्रावरुणः वसिष्ठ । ते तव गुरूणां पित्रादीनाम् । गुरुः पुरोहित । 'अथागस्त्यवसिष्ठयोर्मैत्रावरुणिर्मैत्रावरुणः' इति केदार । 'मङ्गलेऽनन्तरे अथो अथ' इति धरणि । इन्द्राविष्णोरिदं ऐन्द्रावैष्णवम् । अग्निमरुतोरिदं आग्निमारुतम् । सुपर्णस्येद सौपर्णम् । ओजः तेज । ते तुभ्यम् । अस्तु । इन्द्राविष्णू इत्यादिश्रुतिरहस्य । ज्याघोष एव मन्त्रः । जयं च देयादेव । रामलक्ष्मणेत्यनेन लवचन्द्रकेत्वोरुभयोरपि जय इत्यर्थात् सिद्धम् । अत्र त्वामिति एन(?)ते चैकं पुनरुक्तम् ॥ २७ ॥ अतिशोभसे इति वक्तव्यमिति पृथक्कथनं प्रमाद इति कश्चित् । तन्न । 'अत्यन्तमति चैकान्तमत्यर्थम्' इति शब्दमालायां स्वातन्त्र्येणाभिधानादतीति पृथक् प्रयोगो युज्यते । हि स्फुट उच्चारणप्रांशे । नाम प्रसिद्धौ । रथमलमिति ध्वनि । उपकरणेषु रथादिषु । 'साधनमुपकरणं सामग्री च परिच्छदः' इति रत्नाकर । अरण्ये सीदन्तीति अरण्यसदः । चर्या पदस्थिति । अनुपदं वयमपीत्यात्मनैवात्मा स्तूयत इति शङ्कावशात् सलज्जमिवेत्युक्तम् ॥ यदि

---

१ 'पतिः' न. २ 'ऐन्द्र वैष्णवम्' च-घ. ३ 'यदाचरितम्' न.

वयमपि न खल्वेवंप्रायाः क्रतुप्रतिघातिनः
क इह न गुणैस्तं राजानं जनो बहु मन्यते ।
तदपि खलु मे स व्याहारस्तुरङ्गमरक्षिणां
विकृतिमखिलक्षत्राक्षेपप्रचण्डतयाकरोत् ॥ २८ ॥

चन्द्रकेतुः—( सस्मितम् ) किं नु भवतस्तातप्रतापोत्कर्षेऽप्यमर्षः ।

लवः—अस्त्विहामर्षो मा भूद्वा । एतत्तु पृच्छामि । दान्तं हि राजानं राघवं शृणुमः । स किल नात्मना दृप्यति नास्य प्रजा वा दृप्ता जायन्ते । तत्किं मनुष्यास्तस्य राक्षसीं वाचमुदीरयन्ति ।

ऋषयो राक्षसीमाहुर्वाचमुन्मत्तदृप्तयोः ।
सा योनिः सर्ववैराणां सा हि लोकस्य निर्ऋतिः ॥ २९ ॥

इति ह स्म तां निन्दन्ति । अथेतरामभिष्टुवन्ति ।

कामं दुग्धे विप्रकर्षत्यलक्ष्मीं
कीर्तिं सूते दुष्कृतं या हिनस्ति ।
तां चाप्येतां मातरं मङ्गलानां
धेनुं धीराः सूनृतां वाचमाहुः ॥ ३० ॥

---

च वयमपीति ॥ २८ ॥ वयमपि न खल्वेवमिति काकुः । एवं सुजना एवेत्यर्थः । किं तत् इत्यत आह—प्राय इति । प्रायः बहुधा । क्रतुद्विषतां असुरराक्षसानाम् । अरिं हन्तारम् । तदपि तथापि । 'सप्तलोकैकवीरस्य' इति तुरङ्गमरक्षिणा व्याहारः उक्तिः । मे विकृतिं विकारम् । अकरोत् खलु ॥ २८ ॥ 'तप क्लेशसहो दान्तः' इत्यमरः । 'दमशीलो वादः इन्द्रियनिग्रहः' इति भगवान् बोधायनः । अत्र अश्वरक्षकस्येनायाम् । तस्य रामस्य मनुष्याः ॥ ऋषयो राक्षसीमिति ॥ २९ ॥ सा वाक् योनिः कारणम् । लोकस्य चतुर्जनस्य । 'अलक्ष्मीस्तु निर्ऋतिः' इत्यमरः ॥ २९ ॥ इति ह स्म इति कथननार्थः सम्प्रदायः । 'तु हि च स्म ह वै पूर्णौ' इति केशवः । अत एव 'शरभङ्गं ददर्श ह' इति प्राचेतसः ॥ कामं दुग्धे इति ॥ ३० ॥ कामं मनोरथम् । दुग्धे दोग्धि विप्रकर्षति दूरयति । निरस्यन्ति (!) निरस्यति इति । सूनृतां प्रियाम् वाचं धेनुं कामधेनुम् । आहुः वदन्ति ॥ ३० ॥

---

१ 'यदि च वयमप्येव' न. २ 'क्रतुद्विषतामरिं' न, 'क्रतुपति मन्सराः' घ. ३ 'निष्कृतिः' न. ४ 'दानान्दुग्धे' क-घ-व. ५ 'दुहृदो निष्फलान्ति' न. ६ 'शुभ्रां वाचा' म.

सुमन्त्रः—परिपूतस्वभावोऽयं यत्र कुमारः प्राचेतसान्तेवासी। यदन्य-धर्ममभिसम्पन्नमार्षेण संस्कारेण।

लवः—यत्पुनश्चन्द्रकेतो वदसि किं तु भवतस्तातप्रतापोत्कर्षेऽप्यमर्ष इति तत्पृच्छामि किं व्यवस्थितविषयः क्षत्रधर्म इति।

सुमन्त्रः—नैव खलु जानासि देवमैक्ष्वाकं येनैवं वदसि। तद्विरमाति-प्रसङ्गात्।

सैनिकानां प्रमाथेन सत्यमोजायितं त्वया।
जामदग्न्यस्य दमने न हि निर्बन्धमर्हसि ॥ ३१ ॥

लवः—( सहासम्। ) आर्य जामदग्न्यस्य दमन स राजेति कोऽयमुच्चैर्वादः।

सिद्धं ह्येतद्वाचि वीर्यं द्विजानां
बाह्वोर्वीर्यं यत्तु तत्क्षत्रियाणाम्।
शस्त्रग्राही ब्राह्मणो जामदग्न्य-
स्तस्मिन्दान्ते का स्तुतिस्तस्य राज्ञः ॥ ३२ ॥

चन्द्रकेतुः—( सोन्मादमिव। ) आर्य सुमन्त्र कृतमुत्तरोत्तरेण।

कोऽप्येष संप्रति नवः पुरुषावतारो
वीरो न यस्य भगवान्भृगुनन्दनोऽपि।
पर्याप्तसप्तभुवनाभयदक्षिणानि
पुण्यानि तातचरितान्यपि यो न वेद ॥ ३३ ॥

लवः—को हि रघुपतेश्चरितं महिमानं च न जानाति। यदि नाम किंचिदस्ति वक्तव्यम्। अथवा शान्तम्।

वृद्धास्ते न विचारणीयचरितास्तिष्ठन्तु किं वर्ण्यते
सुन्दस्त्रीमथनेऽप्यकुण्ठयशसो लोके महान्तो हि ते।

---

अभिसंपन्नं सुसत्कृतं यथा तथा। संस्कारेण सम्प्रदायेन। ध्वनिश्च। इति यद्वदसि॥ सैनिकानां प्रमाथेनेति॥ ३१॥ दमने निग्रहीतरि रामभद्रे तु विषये निर्बन्धं कर्तुम्॥३१॥ सिद्धं ह्येतदिति॥३२॥ 'वीर्यं बले प्रभावे च' इत्यमर। ध्वनिश्च॥ ३२॥ उन्मादः चित्तविभ्रम। कोऽप्येष संप्रतीति॥ ३३॥ यस्य त्वस्य भृगुनन्दनोऽपि वीरो न। पर्याप्तं यथेप्सितं सप्तभुवनेभ्य अभयदक्षिणा येभ्य। पुण्यानि पूतानि रम्याणि च तातः राम तस्य चरितानि। यः त्वं॥ ३३॥ यदिः सभावनायाम्॥ वृद्धास्ते इति॥ ३४॥ ते रामपादा वन्द्या इत्यर्थ। तर्के। वर्तते चरित-

१ 'परिभूतोऽयं' न. २ 'अभ्युपपन्नमार्षेण' न; 'अभ्युपपन्नम्' क. ३ नातिनिर्बन्ध-मर्हसि' ब-घ. ४ 'शस्त्र' घ. ५ 'तु वर्तते' न. ६ 'दमनेऽप्यखण्डयशस.' घ-ब.

यानि त्रीण्यपराङ्मुखान्यपि पदान्यासन्खरायोधने
यद्वा कौशलमिन्द्रसूनुनिधने तत्राप्यभिज्ञो जनः ॥ ३४ ॥

चन्द्रकेतुः—आ, सातपवादमिश्रमर्याद, अति हि नाम प्रगल्भसे।

लवः—अये मय्येव भ्रुकुटीमुखः संवृत्तः।

सुमन्त्रः—स्फुरितमनयोः क्रोधेन। तथा हि।

चूडामण्डलबन्धनं तरलयत्याकूतजो वेपथुः
किंचित्कोकनदच्छदस्य सदृशो नेत्रे स्वयं रज्यतः।
धत्ते कान्तिमकाण्डताण्डवितयोर्भङ्गेन वक्रं भ्रुवो
श्चन्द्रस्योत्कटलाञ्छनस्य कमलस्योद्भ्रान्तभृङ्गस्य च ॥ ३५ ॥

कुमारौ—तदितो विमर्दक्षमां भूमिमवतराव।

(इति निष्क्रान्ताः सर्वे।)

॥ पञ्चमोऽङ्कः ॥

---

निति शेषः। दूरापातिनाशाय। सुन्दस्त्री ताटका। हि प्रसिद्धौ। स्त्रीवध-इत्यति भावः। यानि त्रीणि पदानि पदक्षेपणानि। पुरः निमुख (पि मुखं) मुखं मार्गं येषां तानि पुरतोमुखान्यपि आसन्। तत्र तेषु पदेषु। जनो-ऽभिज्ञः पश्चान्निवृत्त इति भावः। अत एव 'अपासर्पदनुत्सीनम्' इति रामा-यणे। अथवा इन्द्रसूनुनिधने वालिप्रहारे, यत् कौशलं तत्र वालिन् कौशलेऽपि। जनोऽभिज्ञः। वञ्चनया वालिनि प्रहारेति भावः। तत्रैतस्य एकत्र संनिवेशः सन्दनानुपपन्नः। सुन्दस्त्रीति कनडेषु पश्यति ॥ ३४ ॥ इति एवम्। भ्रुकुटीयुक्तं मुखं यस्य स भ्रुकुटीमुखः॥ क्रोधेनोद्धतेति ॥ ३५॥ आवेशेन आग्रहेण उद्धतं यथा तथा धूतः चलितः कुन्तलभरः यस्मिन्। वक्रं भ्रुवोर्भङ्गेन कौटिल्येन। उत्कटं मत्तं लाञ्छनं हरिणो यस्य तस्य चन्द्रस्य। उद्भ्रान्तः सभ्रान्तः भृङ्गः यस्मिन्। तस्य कमलस्य च कान्तिं धत्ते इत्यनेन वक्रं चन्द्रकमलबिम्बाकृतिधारीति कवेस्तात्पर्यम्। न तु पाण्डिमा रक्तिमा वा विवक्षितः। अत एव 'किमिन्दुः किं पद्मं किमु मुकुरबिम्बं किमु मुखम्' इति बिल्हणः ॥ ३५ ॥ विमर्दक्षमां युद्धयोग्याम् इति दिक्॥ इति महाराजपदः घनश्यामपण्डितविरचिते उत्तररामचरित सञ्जीवनाख्यटि-प्पणे पञ्चमोऽङ्कः समाप्तः ॥ इति पञ्चमोऽङ्कः ॥

---

१ 'अकुशोभिमान्यपि' प, 'अकुशोन्मुखानि' न. २ 'सातपवादिन्' व. ३ 'भर' क-घ-च. ४ 'जैघेनेव्वभूतकुन्तलभर. स्वाहतो' न-टी. ५ 'कान्तिरिव च वक्रयत्नदोर्भङ्गेन निवभुशे.' न.

* प्रथमाङ्कीकसमातौ शकाकृता यदानहृच कथैव तदयाप्यनुसन्धेयम्.

# षष्ठोऽङ्कः ।

( ततः प्रविशति विमानेनोज्ज्वलं विद्याधरमिथुनम् । )

विद्याधरः—अहो नु खल्वनयोर्विकर्तनकुलकुमारयोरकाण्डकलहप्रचण्डयोरद्योतितक्षेत्रलक्ष्मीकयोरत्यद्भुतोत्क्रान्तदेवासुराणि विक्रान्तचरितानि । तथाहि प्रिये पश्य पश्य ।

> रणत्कैरणझञ्झणत्क्वणितकिङ्किणीकं धनु-
> र्ध्वनद्गुरुगुणाटनीकृतकरालकोलाहलम् ।
> वितत्य किरतोः शरानविरतं पुनः शूरयो-
> र्विचित्रमभिवर्तते भुवनभीममायोधनम् ॥ १ ॥
> जृम्भितं च विचित्राय मङ्गलाय द्वयोरपि ।
> स्तनयित्नोरिवामन्ददुन्दुभेर्दुन्दुमायितम् ॥ २ ॥

तत्प्रवर्ततामनयो प्रवीरयोरनवरतमविरलमिलितविकचकनककमलकमनीयसंहतिरमरतरुत्तरणमणिमुकुलनिकरमकरन्दसुन्दरः पुष्पनिपातः ।

---

अथ रामकुशलवचन्द्रकेतूनां सलापं वर्णयिष्यन् कविः 'रतोपयामयुद्धादि न साक्षादीरये यदि हे (?) इति नाटकलक्षणस्यावश्यकतया विद्याधरमिथुनमुखानुवादेन पञ्चमाङ्कावसानोपक्षिप्त चन्द्रकेतुलवशस्त्राशस्त्रिसमरघटमुद्दङ्कयति—तत इति ॥ विक्रान्ते शौर्यस्य ॥ रणत्करणझञ्झणेति ॥ १ ॥ रणत्करणेन शब्दानुकरणेन सह झञ्झणन्त्यः दीप्यमानाः । क्वणितयुक्ता किङ्किण्यो यस्मिन् । ध्वनद्गुरुगुणया अटन्या कोट्या कृतः दारुणकलकल यस्मिन् । धनुः कर्म । वितत्य प्रसार्य कोटिद्वयकर्षणादुत्तरक्षण इति भाव । अविरतं अनिशं । मुहुः असकृत् । अभिवर्तते समन्ताद्वर्तते ॥ १ ॥ जृम्भितमिति ॥ २ ॥ 'विचित्र तु विविधेऽपि च विस्मये' इति हलायुध । द्वयोः मङ्गलाय शुभाय शकुनाय च । स्तनयित्नोर्मेघस्येव । अमन्दं महत् । दुन्दुमायितं शब्दानुकार कर्तृ । विजृम्भितं आविर्भूतमित्यर्थ ॥ २ ॥ अनवरतं सन्ततम् । अविरलं सान्द्रं यथा तथा । मिलिता कमलानां कमनीया संहतिः सह यस्मिन् । निकराणां समूहानाम् । मकरन्दैः रम्यश्चासौ पुष्पनिपातः कर्तृपदमेतत् । निपात इति ध्वनि । तस्मात् किमिति आकाशं

---

१ 'क्षात्र' ख–घ. २ 'विलसितानि' न, 'विचरणानि' घ. ३ 'झणज्झणितक्वण' क–ख–घ. ४ 'अविरतपुरचूडयो.' क–घ–ग. ५ 'अभिवर्धते' ख–घ. ६ 'विजृम्भितं च दिव्यस्य' क–घ–च. ७ 'अमन्द' क–घ–ख. ८ 'लसित' क–घ–ख.

**विद्याधरी**—ता किं ति उण अआण्डविप्फुरिदणडिल्लडाकडारं विअ अम्बरं झत्ति संवुत्तम्। तत्किमिति पुनरकाण्डविस्फुरिततडिच्छटाकडारमिवाम्बरं झटिति संवृत्तम्।

**विद्याधरः**—तत्किं नु खल्वद्य

त्वष्टृयन्त्रभ्रमिभ्रान्तमार्तण्डज्योतिरुज्ज्वलः।
पुटभेदो ललाटस्थनीललोहितचक्षुषः ॥ ३ ॥

आं ज्ञातम्। जातक्षोभेण चन्द्रकेतुना प्रयुक्तमग्नेयमस्त्रमाग्नेयम्। यस्यायमतिरुद्धदामपातः। संप्रति हि। आश्चर्यम्।

अवदग्धकर्बुरितकेतुचामरै-
रपयातमेव हि विमानमण्डलैः।
दहति ध्वजांशुकपटावलीमिमां
नवकिंशुकद्युतिसविभ्रमः शिखी ॥ ४ ॥

अहो च एवायमुच्चण्डवज्रखण्डावस्फोटपटुरवस्फुलिङ्गगुरुरुत्तालतुमुललेलिहानोज्ज्वलज्वालासंभारभैरवो भगवानुषर्बुधः। प्रचण्डश्चास्य सर्वतः सन्तापः। तत्प्रियामङ्गेनाच्छाद्य सुदूरमपसरामि। ( तथा करोति। )

---

ताण्डवितोद्दण्डतरलतडिच्छटाकडारमिव झटिति संवृत्तम्। 'उद्दण्ड' इति बहुलवाचको देशीयशब्दः। 'उद्दण्ड' इति महाराष्ट्राः। 'छटा परम्परा' इति जयः ॥ त्वष्टृयन्त्रभ्रमीति ॥ ३ ॥ त्वष्टुः विश्वकर्मणः। यन्त्रं शाणचक्रम्। तस्य भ्रम्या भ्रमणेन। भ्रान्तस्य मार्तण्डस्य। ज्योतिषा उज्ज्वलः। 'आङ्गारमञ्जियाम्' इति रभसः। नीललोहितस्य रुद्रस्य। चक्षुषः नेत्ररूपाग्नेः। पुटभेदः। 'शुक्तिकाम्बरे पुट' इति विश्वाच्छी। 'मूस' इति महाराष्ट्राः। तथा च गगनपुटे आग्नेयास्त्रमिदं नार्गिडवत् रुद्रनेत्राग्निवद्दुस्सहमिति भावः ॥ ३ ॥ अप्रतिरूपं अप्रतिद्वन्द्वम्। अचिरात् झटिति संपातः पतनं यस्य ॥ अवदग्धकर्बुरितेति ॥ ४ ॥ अवदग्धानि कर्बुरितानि सञ्जातचित्रवर्णानि चामराणि येषु। किंशुकद्रुम इव सविभ्रमः सविलासः। अनेनारुण्यं सूचितम्। शिखी अग्निः ॥ ४ ॥ खण्डावस्फोटैः शकलकम्पैः पटुः। उत्तालाः उद्धताः। तुमुललोलाः एकसङ्कुलतरलाः। लेलिहानाः ये उज्ज्वलाः तेषां संभारैः भैरवः उषर्बुधः अग्निः। 'उत्ताल-

---

१ 'त्वाष्ट्र' क–घ–व. २ 'अप्रतिरूपम्' इति नास्ति क–घ–व–पुस्तकेषु. ३ 'अभिवन्दर°' न. ४ 'वर्बरित' न. ५ 'दधति ध्वजांशुकपटावलीर्विमाः क्षणकुङ्कुमच्छुरणविभ्रम शिखा' क–घ–व. ६ 'पटुतर' घ–व, 'पटुरव' न. ७ 'अञ्चलेन' न.

**विद्याधरी**—दिट्ठिआ एदेण विमलमुत्ताफलअसीदलसिणिद्धमसिणमंसलेण णाहदेहप्फसेण आणन्दमदमउलिदघुण्णतलोअणाए अब्भोदिदो जेव्व अन्तरिदो मे सन्दावो। दिष्ट्या एतेन विमलमुक्ताफलकशीतलस्निग्धमसृणमांसलेन नाथदेहस्पर्शनानन्दमन्दमुकुलितघूर्णमानलोचनाया अभ्योदित एवान्तरितो मे सन्तापः।

**विद्याधरः**—अयि किमत्र मया कृतम्। अथवा।

> अकिञ्चिदपि कुर्वाणः सौख्यैर्दुःखान्यपोहति।
> तत्तस्य किमपि द्रव्यं यो हि यस्य प्रियो जनः ॥ ५ ॥

**विद्याधरी**—कहं अविरलविलोलघुण्णन्तविज्जुलदाविलासमण्डिदेहिं मत्तमोरकण्ठसामलेहिं ओत्थरीअदि णमोङ्गणं जलहरेहिं। कथमविरलविलोलघूर्णमानविद्युल्लताविलासमण्डितैर्मत्तमयूरकण्ठश्यामलैरवस्तीर्यते नभोङ्गणं जलधरैः।

**विद्याधरः**—हन्त कुमारलवप्रयुक्तवारुणास्त्रप्रभावः खल्वेषः। कथमविरलप्रवृत्तवारिधारासहस्रसम्पातैः प्रशान्तमेव पावकास्त्रम्।

**विद्याधरी**—पिअं मे पिअं मे। प्रियं मे प्रियं मे।

---

स्तूद्यते इति रेल्हिहानस्तु भक्षक इति। 'सामग्र्यामपि सम्भारः' इति धरणिहारावलीनेदारा ॥ दिष्ट्या एतेन विमलमुक्ताफलशीतलस्निग्धमसृणमांसलेन नाथदेहस्पर्शेन आनन्दमन्दमुकुलितघूर्णमानलोचनाया अभ्योदित एवान्तरितो मे सन्तापः। स्निग्धः चिक्कणः। मनोहरे च मसृणम्' इत्यमरमाला। मांसलो निबिडः। अभ्युदितः जातः। अन्तरितः अन्तर्हित एव ॥ अकिञ्चिदपि कुर्वाण इति ॥ ५ ॥ किमत्र भवतीयरिञ्चित्। किञ्चिदपि न कुर्वाण इत्यर्थः। यः प्रियो जनः सौख्यैः यस्य दुःखान्यपोहति दूरीकरोति, तस्य दुःखमुक्तस्य तत्सौख्यैः दुःखहर्ता जन इति भावः। किमपि अनिर्वाच्यम्। द्रव्यं गुणाश्रयो हि। द्रव्यविषयत्वात्तदिति नपुंसकत्वेन निर्देशः ॥ ५ ॥ कथमविरलविलोलघूर्णद्विद्युल्लताविलासमण्डितैर्मत्तमयूरकण्ठश्यामलैः अवस्तीर्यते नभोऽङ्गणं जलधरैः। वाग्नाथरो 'घोल्त' शब्दो देशीयः। 'घोल्ता' इति महाराष्ट्राः ॥ प्रियं मे प्रियं मे। अतिमात्रं शतिशय इत्यर्थः। क्षोमेण गम्भीरं यथा तथा प्रसद्भिर्मेघैः। नद्धं सन्नद्धम्। प्रवासवाचको 'गडगल' शब्दो देशीयः। गळाय' इति महाराष्ट्राः। 'सान्द्रस्नि

---

१ 'अब्भोदिदो' (अभ्योदितः) क पुस्तकेऽस्ति घ ग-पुस्तकयोः २ 'न किञ्चिदपि' क–न

विद्याधरः—हन्त हन्त भोः सर्वमतिमात्रं दीपाय। मत्प्रलयवाता-वलिक्षोभगम्भीरगुलुगुलायमानमेघमेदुरान्धकारनीरन्ध्रनद्धमिव एकवारवि-घस्मरविकटविकरालकालमुखकन्दरविवर्तमानमिव युगान्तयोगनिद्रानिरुद्ध-सर्वद्वारनारायणोदरनिविष्टमिव भूतजातं प्रवेपते। साधु चन्द्रकेतो साधु। स्थाने वायव्यमस्त्रमीरितम्। यतः।

> विद्याकल्पेन मरुता मेघानां भूयसामपि।
> ब्रह्मणीव विवर्तानां क्वापि प्रविलयः कृतः॥ ६॥

विद्याधरी—णाध को दाणि एसो ससम्भमुक्खित्तकरग्गमिदोत्तरीआ-ञ्चलो दूरदो जेव्व महुरसिणिद्धवअणपडिसिद्धजुद्धव्वावारो एदाणं कुमाराणं अन्दरे विमाणवरं ओदारेदि। नाथ क इदानीमेष ससम्भ्रमोत्क्षिप्तकराग्रभ्रमितो-त्तरीयाञ्चलो दूरत एव मधुरस्निग्धवचनप्रतिषिद्धयुद्धव्यापार एतयोः कुमारयो-रन्तरे विमानवरमवतारयति।

विद्याधरः—(दृष्ट्वा) एष शम्बूकवधात्प्रतिनिवृत्तो रघुपतिः।

> शान्तं महापुरुषसङ्गदितं निशाम्य
> तद्गौरवात्समुपसंहृतसंप्रहारः।

———

श्चस्तु मेदुर' इत्यमरः। एकवार सकृत्। विकट कुटिल। कन्दरे विवर्तमानं परिणममानम्। निद्रया निरुद्धानि आवृतानि सर्वद्वाराणि शरीरस्थनवद्वाराणि यस्य। निविष्टं प्रविष्टमिव यत् तद् भूतजातं प्राणिस-मूह प्रवेपते इति अन्वयो योज्यः॥ विद्याकल्पेनेति॥ ६॥ विद्यायाः मोक्षसाधनीभूतवेदान्तस्य कल्पेन पारशीलनेन। 'कल्पो योगे च परिशीलने' इति धनञ्जयः। ब्रह्मणि विवर्तानां जगतां प्रविलयः ऐक्यमिव। मरुता वायुना मेघानां क्वापि प्रकारे इति शेषः। प्रविलयः प्रनाशनम् कृतम्॥ ६॥ नाथ क इदानीमेष ससम्भ्रमोत्क्षिप्तोत्तरीयाञ्चलः दूरत एव मधुरस्नि-ग्धवचनप्रतिषिद्धव्यापारः कुमारयोरन्तरं विमानोत्तरंचरो नाहरति। वचनघूर्णनं निषेधव्यञ्जक इति जगद्धरभवभिदम्। अन्तरे मध्ये ध्वनिः॥ शान्तं महापुरुषेति॥ ७॥ शान्तं सौम्यम्। ध्वनिः। महापुरुषस्य रामस्य संगतकं हृदयङ्गमम्। साधे क इति कथितम्। तत्र, 'चिरोऽम्बुवचनेषु कम्' इति केदारः। कृत्यासङ्गतमिलस्य हृदयङ्गमवचनमिलयं इति कथनस्यौचि-तत्वात्। संप्रहारः युद्धम्। शान्तो ऽत्र इति ध्वनिः। तु पादपूरण

———

१ 'गुलगुलायमान' घ, 'गुणगुणायमान' ब. २ 'निरुद्धम्' ब-घ. ३ 'विस्पते' ब. ४ 'शब्द' ब-घ. ५ 'निविष्टि' ब-घ.

शान्तो लवः प्रणत एव च चन्द्रकेतुः
कल्याणमस्तु सुतसङ्गमेनेन राज्ञः ॥ ७ ॥

तदितस्तावदेहि । ( इति निष्क्रान्तौ । )

मिश्रविष्कम्भकः ।

---

( ततः प्रविशति रामो लवः प्रणतश्चन्द्रकेतुश्च । )

राम.—( पुष्पकादवतरन् । )

दिनकरकुलचन्द्र चन्द्रकेतो
सरभसमेहि दृढं परिष्वजस्व ।
तुहिनशकलशीतलैस्तवाङ्गैः
शममुपयातु ममापि चित्तदाहः ॥ ८ ॥

( उत्थाप्य सस्नेहास्रं परिष्वज्य । ) अपि नाम कुशलं तव दिव्यास्त्रपरदेहस्य ।

चन्द्रकेतु.—कुशलमत्यद्भुतक्रियस्य प्रियदर्शनस्य लवस्य लाभाभ्युदयेन । तद्विज्ञापयामि मामिव विशेषेण वा मत्तः स्निग्धेन चक्षुषा पश्यत्वमुं वीरैमनराख्यसाहस तात ।

राम.—( लवं निरूप्य । ) दिष्ट्या अतिगम्भीरमधुरकल्याणाकृतिरयं वयसो वत्सस्य ।

त्रातुं लोकानिव परिणतः कायवानस्त्रवेदः
क्षात्रो धर्मः श्रित इव तनुं ब्रह्मकोशस्य गुप्त्यै ।
सामर्थ्यानामिव समुदयः सञ्चयो वा गुणाना-
माविर्भूय स्थित इव जगत्पुण्यनिर्माणराशिः ॥ ९ ॥

लव.—( स्वगतम् । ) अहो पुण्यानुभावदर्शनोऽयं महापुरुषः ।

---

इति केचित् । चन्द्रकेतुस्त्विलन्ये । स चन्द्रकेतुरिति वा पाठः । सुतयोः सङ्गमनेन प्राप्त्या । सङ्गमने इति सप्तमीलाभाय राज्ञ इति ध्वनिः ॥ ७ ॥ मिश्रविष्कम्भ इति उदात्तनीचपात्रोक्तौ मिश्रविष्कम्भ' इति लक्षणात् । दिनकरकुलेति ॥ ८ ॥ 'धेयार्धे चन्द्रहासाया' इति मेदिनी । दाहः ताप ॥ ८ ॥ अनरालं मञ्जु ॥ त्रातुं लोकानिवेति ॥ ९ ॥ धर्मः क्षात्रो य धर्म आचार एव कोशः पर्याप ॥ समुदय संचयश्च राद्ध । ध्वनिश्च । जगतः पुण्यनिर्माणानां सुकृतविरचनानाम् । राशि पुञ्ज ॥ ९ ॥ पुण्यस्य अनुभावः प्रभाव यस्मात् तादृश दर्शनं आलोकन यस्य । पुण्या-

१ 'संमिलनेन' घ. २ 'महावीरप्रकाण्डम्' क-घ-च.

आश्वासस्नेहभक्तीनामेकमायतनं महत्।
प्रकृष्टस्येव धर्मस्य प्रसादो मूर्तिसुन्दरः ॥ १० ॥

आश्चर्यम्।

निरोधो विश्रान्तः प्रसरति रसो निर्वृतिघन-
स्तदौद्धत्यं क्वापि व्रजति विनयः प्रह्वयति माम्।
झटित्यस्मिन्दृष्टे किमिव परवानस्मि यदि वा
महार्घस्तीर्थानामिव हि महतां कोऽप्यतिशयः ॥ ११ ॥

रामः—तत्किमयमेकपद एव मे दुःखविश्रामं ददात्युपस्नेहयति च कुतोऽपि निमित्तादन्तरात्मानम्। अथवा स्नेहश्च निमित्तसव्यपेक्ष इति विप्रतिषिद्धमेतत्।

व्यतिषजति पदार्थानान्तरः कोऽपि हेतु-
र्न खलु बहिरुपाधीन्प्रीतयः संश्रयन्ते।

---

नि पवित्ररम्याणि। अनुभावः सम्मतिनिश्चयः। दर्शनानि शास्त्राणि च यस्मि-न्। 'अनुभावः प्रभावे च सतां च मतिनिश्चये' इत्यमरः ॥ **आश्वास इवेति** ॥ १० ॥ **आश्वासस्नेहयोः** सान्त्वनप्रणययोः स्वनिष्ठयोरिति भावः। **भक्तीनां** परकर्तृकाणामिति भावः। **एकं** अद्वितीयम्। **आयतनं** स्थानम्। **प्रकृष्टस्य** आवश्यकस्य। **धर्मस्य** अश्वमेधादेः। 'यजेताश्वमेधेनैर्बहुसुवर्णकैः' इति स्मरणात्। **मूर्त्या सुन्दरः** मूर्तिः शरीरं सुन्दरं यस्येति वा। सौन्दर्येण मूर्त इति भावः। प्रसादः अनुग्रह इव स्थित इति शेषः। तथा चाश्वमेधस्यैव फलं राम इति भावः ॥ १० ॥ **विरोधो विश्रान्त इति** ॥ ११ ॥ स प्रसिद्धः। **विश्रान्तः** विरतः वीरो **रसः** <u>निर्वृतिघनः सुखमान्द्रः सन्</u>। **प्रसरति** व्याप्तो भवति। तत् परमपदहरम्। **प्रह्वयति** नमयति। अस्मिन् महापुरुषे। 'पराधीनः परवानाथवानपि' इत्यमरः। **यदि वा** अथवेत्यर्थः। 'पक्षोत यदि वाथवा' इति विक्रमार्कः। **तीर्थानां** गुरूणामिव। **महतां** पूज्यानाम्। **महार्घः** उत्सवपूर्वकपूजाविधिरित्यर्थः। 'मह उत्सवे' इति, 'पूजाविधावर्घः' इति चामरः। **कोऽपि अतिशयो हि** ॥ ११ ॥ 'सहसा स्यादेकपदे' इति नन्दी। दुःखाय विश्रामं विरतिं अभावमिति यावत्। कुतः कस्मादपि। **निमित्तात्** कारणात्। **निमित्तेन सव्यपेक्षः** सापेक्ष इत्येतत्। **विप्रतिषि-द्धं** विशेषेण निषिद्धमित्यर्थः ॥ तदेवोपपादयति ॥ **व्यतिषजति इति** ॥ १२ ॥

---

१ 'आश्वास इव भक्तीनामेकम्' न, 'एकमालम्बनं' क-घ-व. २ '०सञ्चर.'
३ 'किमिति' न; 'किमपि' क.

विकसति हि पतङ्गस्योदये पुण्डरीकं
द्रवति च हिमरश्मावुद्गते चन्द्रकान्तः ॥ १२ ॥

लवः—चन्द्रकेतो क एते ।

चन्द्रकेतुः—प्रियवयस्य ननु तातपादाः ।

लवः—ममापि तर्हि धर्मतस्तथैव । यतः प्रियवयस्य इति भवतोक्तम् । किं तु चत्वारः खलु भवतामेवंव्यपदेशभागिनस्तत्रभवन्तो रामायणकथापुरुषाः । तद्विशेषं ब्रूहि ।

चन्द्रकेतुः—ननु ज्येष्ठतातपादा इत्यवेहि ।

लवः—( सोल्लासम् । ) कथं रघुनाथ एव । दिष्ट्या सुप्रभातमद्य यदयं देवो दृष्टः । ( सविनयकौतुकं निर्वर्ण्य । ) तात प्राचेतसान्तेवासी लवोऽभिवादयते ।

रामः—आयुष्मन् एह्येहि । ( इति सस्नेहमालिङ्ग्य । ) अयि वत्स कृतं कृतमतिविनयेन । अनेकवारमपरिश्लथं परिष्वजस्व माम् ।

परिणतकठोरपुष्करगर्भच्छदपीनमसृणसुकुमारः ।
नन्दयति चन्द्रचन्दननिष्यन्दजडस्तव स्पर्शः ॥ १३ ॥

लवः—( स्वगतम् । ) ईदृशो मां प्रत्यमीषामकारणस्नेहः । मया पुनरेभ्य एव द्रोग्धुमज्ञेनायुधपरिग्रहः कृतः । ( प्रकाशम् । ) मृष्यन्त्विदानीं लवस्य बालिशतां तातपादाः ।

---

आन्तरः अन्तःकरणात्मको हेतुः । पदार्थान् प्रतिरूपान् । व्यतिषजति व्यतिषक्तान् सबद्धान् करोतीत्यर्थः । 'व्यतिषजति सबध्नाति' इति श्रीनाथः । 'उपाधिस्तु निमित्ते च' इति हेमचन्द्रः । तत्रोदाहरणमाह—वीति । पतङ्गस्य रवेः । पुण्डरीकं सिताम्भोजम् । हिमरश्मौ च द्रे । उद्गते उदिते सति । चन्द्रकान्तशिला । द्रवति स्रवतीति माठरः । तथा च अतिदूरे रवौ चन्द्रेऽप्युदिते यथा पुण्डरीकं विकसति चन्द्रकान्तश्च द्रवति । तथैव केनाप्यान्तरहेतुना प्रीतयो वर्धन्ते। नात्र निमित्तापेक्षेति भावः ।'प्रतिस्नेह प्रेम्णा च' इति वामनः ॥ १२ ॥ क एत इति पूजायां बहुत्वम् । तथैव तातपादा इत्यर्थः ।भवतामिति पूजायाम् । कुशलवचन्द्रकेतुप्रमुखानामिति च व्यज्यते । भवत इति च पाठः । एवं व्यपदेशः तातेति व्यवहारः स एव भागः येषामस्ति ते भागिनः । तत्रभवन्तः पूज्याः । 'व्यपदेशस्तु व्यवहारः' इति शब्दार्णवे । तेषु विशेषम् । अपरिश्लथं दृढम् ॥ परिणतकठोरेति ॥१३॥ परिणत-

---

१ 'अङ्गेन मामपरिश्लथं परिरम्भस्व' न. २ 'अभिद्रुग्धमज्ञेन यदायुधपरिग्रहमावद्ध्यारूढो दुर्योग ' क-ध-य.

रामः—किमपराद्धं वत्सेन ।

चन्द्रकेतुः—अश्वानुयात्रिकेभ्यस्तातप्रतापाविष्करणमुपश्रुत्य वीरायितमनेन ।

रामः—नन्वयमलङ्कारः क्षत्रस्य ।

> न तेजस्तेजस्वी प्रसृतमपरेषां विषहते
> स तस्य स्वो भावः प्रकृतिनियतत्वादकृतकः ।
> मयूखैरश्रान्तं तपति यदि देवो दिनकरः
> किमाग्नेयो ग्रावा निकृत इव तेजांसि वमति ॥ १४ ॥

चन्द्रकेतुः—अमर्षोऽप्यस्यैव शोभते महावीरस्य । पश्यन्तु हि तातपादाः प्रियवयस्यनियुक्तजृम्भकास्त्रनिष्कम्पस्तम्भितानि सर्वत. सैन्यानि ।

रामः—वत्स लव संह्रियतामस्त्रम् । त्वमपि चन्द्रकेतो निर्व्यापारविलक्षितानि सान्त्वय बलानि ।

लवः—यथाज्ञापयन्ति तातः । ( इति प्रणिधानं नाटयति । )

चन्द्रकेतुः—यथादिष्टम् । ( इति निष्क्रान्तः । )

लवः—तात प्रशान्तमस्त्रम् ।

रामः—वत्स सरहस्यप्रयोगसंहाराण्यस्त्राण्याम्नायवन्ति ।

> ब्रह्मादयो ब्रह्महिताय तप्त्वा
> परःसहस्राः शरदस्तपांसि ।

---

कठोरपुष्कराणां विकचतरुणारविन्दानाम् । आन्तरपुटवत् पीनः स्थूलः । जड. शिशिरः ॥ द्रोग्धुं द्रोहं कर्तुम् । वालिशतां मौर्ख्यम् । वीरवदाचरितं वीरायितं पौरुषं कृतमित्यर्थ । ध्वनिश्च ॥ न तेजस्तेजस्वीति ॥ १४ ॥ प्रसृतं व्याप्तम् । तस्य तेजस्विन । प्रकृतिनियतत्वात् जन्मसिद्धत्वात् । 'जन्मस्थितिस्वभावेषु प्रकृति.' इति कपिल । अकृतकः अकृत्रिम.। मयूखैः किरणैः । अश्रान्तं अनिशम् । तपति यदि तपति चेद् । आग्नेयग्रावा 'सूर्यकान्तस्त्वभिमणि ' इति, 'विकृतः स्याद्विप्रकृत' इति चामरः । 'तस्मिन् विप्रकृता काले' इति ईश्वरकृष्णमिश्र: ॥१४॥ निर्व्यापाराणि व्यापाररहितानि । अत एव विलक्षणा(क्षिता?)नि । बलानि सैन्यानि । प्रणिधानं ध्यानम् । सरहस्या. जृम्भकाणां प्रयोगोपसंहाराः येषु तानि । पाराय-

---

१ 'प्रसहते' घ-व. २ '०नियुक्तेन जृम्भकास्त्रेण निष्कम्प स्तम्भितानि सर्वसैन्यानि' न. ३ '०संहारजृम्भकास्त्राणि दिष्टया वत्सलानि संपद्यन्ते' न. ४ 'परःसहस्रं' क-न.

एतान्यपश्यन्गुरवः पुराणाः
स्वान्येव तेजांसि तपोमयानि ॥ १५ ॥

अथैतन्मन्त्रपारायणोपनिषदं भगवान्कृशाश्वः परःसहस्रसंवत्सरान्तेवासिने कौशिकाय प्रोवाच। स तु भगवान्मह्यमित्येष गुरुपूर्वानुक्रमः। कुमारस्य कुतः संप्रदाय इति पृच्छामि।

लवः—स्वतःप्रकाशान्यावयोरस्त्राणि।

रामः—( विचिन्त्य। ) किं न संभाव्यते। प्रकृष्टपुण्यपरिपाकोपादानः कोऽपि महिमा स्यात्। द्विवचनं तु कथम्।

लवः—भ्रातरावावां यमौ।

रामः—स तर्हि द्वितीयः क्व।

( नेपथ्ये। ) दाण्डायन

आयुष्मतः किल लवस्य नरेन्द्रसैन्यै-
रायोधनं ननु किमात्थ सखे तथेति।
अद्यास्तमेतु भुवनेष्वधिराजशब्दः
क्षत्रस्य शस्त्रशिखिनः शममद्य यान्तु ॥ १६ ॥

रामः—अथ कोऽयमिन्द्रमणिमेचकच्छवि-
र्ध्वनिनैव बद्धपुलकं करोति माम्।
नवनीलनीरधरधीरगर्जित-
क्षणबद्धकुड्मलकदम्बडम्बरम् ॥ १७ ॥

लवः—अयमसौ मम ज्यायानार्यः कुशो नाम भरताश्रमात्प्रतिनिवृत्तः।

रामः—( सकौतुकम्। ) वत्स इत एवाह्वयैतमायुष्मन्तम्।

लवः—एवम्। ( इति परिक्रामति। )

---

णस्य पठनस्य। उपनिषदं। परःसहस्रेभ्यः प्रभृति। अन्तेवासिने शिष्याय। गुरूणाम्। कुतः कस्मात्। पुण्यानां परिपाकः परिणाम एव उपादानं कारणं यस्य। उपादानमिति यमाविति च ध्वनी। तथा अतिशयेनेत्यर्थः ॥ आयुष्मतः किलेति ॥ १६ ॥ क्षत्रस्य रामस्येति भावः। शस्त्राण्येव शिखिनः अग्नय ॥ १६ ॥ अथ कोऽयमिन्द्रेति ॥१७॥ इन्द्रमणिवत् मेचका नीला छविः कान्तिः यस्य। धीरगर्जितक्षणे गम्भीरस्तनितक्षणे। बद्धकुड्मलः य कदम्बो नीपः तस्य डम्बरः आरभटी यस्य तम्।

---

१ 'अथैतामस्त्रमन्त्रोपनिषदम्' न-क. २ 'सहस्राधिकसंवत्सरपरिचर्यानिरता यान्ते०' न. ३ 'पूर्वानुक्रम.' घ, 'क्रम.' ख. ४ 'भुवनेषु च राज०' न.

( ततः प्रविशति कुशः । )

कुशः—( साकूतहर्षगर्वं धनुरास्फालयन् । )

दत्तेन्द्राभयदक्षिणैर्भगवतो वैवस्वतादा मनो-
दृप्तानां दहनाय दीपितनिजक्षत्रप्रतापाग्निभिः ।
आदित्यैर्यदि विग्रहो नृपतिभिर्धन्यं ममैतत्ततो
दीप्तास्त्रस्फुरदुग्रदीधितिशिखानीराजितज्यं धनुः ॥ १८ ॥

( इति विकटं परिक्रामति । )

रामः—कोऽप्यस्मिन्क्षत्रियपोतके पौरुषातिरेकः ।

दृष्टिस्तृणीकृतजगत्त्रयसत्त्वसारा
धीरोद्धता नमयतीव गतिर्धरित्रीम् ।
कौमारकेऽपि गिरिवद्गुरुतां दधानो
वीरो रसः किमयमेत्युत दर्प एव ॥ १९ ॥

लवः—( उपसृत्य । ) जयत्वार्यः ।

कुशः—नन्वायुष्मन् किमियं वार्ता युद्धं युद्धमिति ।

लवः—यत्किंचिदेतत् । आर्यस्तु दृप्तभावमुत्सृज्य विनयेन वर्तताम् ।

कुशः—किमर्थम् ।

---

'आर्भटी चारभटीकाऽम्बरश्च' इति रुद्रः ॥ १७ ॥ दत्तेन्द्राभयेति ॥ १८ ॥ वैवस्वतान्मनोरागतैः जातागमैः । संभूतैरिति यावत् । दृप्तानां गर्वितदैत्यानाम् । आदित्यैः वैकर्तनैः । 'ऐक्ष्वाकिजनकादित्यवैदेहरघवो दिवः' इत्यगस्त्य- । मानवैरिति च पाठः । ततः विस्तृतः । विग्रहो यदि युद्धं चेत् । धनुः । दीप्तास्त्राण्येव स्फुरन्तौ उग्रदीधिती अग्निसूर्यौ तयोः शिखाभिः ज्वालाभिः । नीराजिता कृतनीराजना । शुम्भि(म्फि?)तेति यावत् । ज्या मौर्वी यस्मिन् तादृशं शोभतामिति शेषः । धनुर्मे योजिताज्यं भवत्विति भावः ॥१८॥ क्षत्रपोते क्षत्रियडिम्भे । पौरुषस्य सामर्थ्यस्य । अतिरेकः आधिक्यम् ॥ दृष्टिस्तृणीकृतेति ॥१९॥ जगत्त्रये सत्त्वाः । 'बलाधिके च सत्त्वोऽस्त्री' इत्यमरशेषः । गतिः गमनम् । पादार्पणक्रम इति यावत् । 'बाल्ययौवनमध्यस्थं वयः कौमारकं विदुः ।' इति नन्दी । गुरुतां गुरुत्वं गुणविशेषं महत्त्वं च । गिरिवदिति कथनं गुरुतायाः सार्वकालिकत्वसूचकम् । उत अथवा । 'औद्धत्यव्यञ्जको दर्पः ।' इति गोवर्धनः ॥ १९ ॥ युद्धमित्यनादरे । यत्किञ्चिदिति कथनं आत्मसदृशयुद्धाभावज्ञापकम् । दृप्तभावं दर्पम् ।

---

१ 'सकोपं कृतभैरवं' न. २ 'दमनाय' न. ३ 'दीप्तास्त्र०' न-घ-व.
४ 'वत्सज्यायोऽस्मिन् विनयेन' व-घ.

लवः—यदत्र देवो रघुपतिस्तिष्ठति । स च सिद्धसाधयोरुत्कण्ठते युष्मत्संनिकर्षस्य ।

कुशः—( सतर्कम् । ) स रामायणकथानायको ब्रह्मकोशस्य गोपायिता ।

लवः—अथ किम् ।

कुशः—आशंसनीयपुण्यदर्शनः स महात्मा । किं तु कथमस्माभिरुपगन्तव्य इति न संप्रधारयामि ।

लवः—यथैव गुरुस्तथोपसदनेन ।

कुशः—कथं हि नामैतत् ।

लवः—अत्युदात्तः सुजनश्चन्द्रकेतुरौर्मिलेय प्रियवयस्येति सख्येन मामुपतिष्ठते । तेन तत्सम्बन्धेन धर्मतात एवायं राजर्षिः ।

कुशः—संप्रत्यवचनीयो राजन्येऽपि प्रश्रयः ।

( उभौ परिक्रामतः । )

लवः—पश्यत्वेनमार्यो महापुरुषमाकारानुभावगाम्भीर्यसम्भाव्यमानविविधलोकोत्तरसुचरितातिशयम् ।

कुशः—( निर्वर्ण्य । )

अहो प्रासादिकं रूपमनुभावश्च पावनः ।
स्थाने रामायणकविर्देवीं वाचं व्यवीवृतत् ॥ २० ॥

( उपसृत्य ) तात प्राचेतसान्तेवासी कुशोऽभिवादयते ।

रामः—एह्येह्यायुष्मन् ।

---

आवयोरिति सप्तमीद्विवचनम् । आतङ्क । ब्रह्माण एव विप्रा त एव कोशः अर्थौघ । 'वेदस्तत्त्व तपो ब्रह्म ब्रह्मा विप्र.' इत्यमर । 'गुरुस्तात उपाध्याय.' इति धटन इति शेर । उदात्त महान् । और्मिलेयः ऊर्मिलापुत्र. । 'सख्य साप्तपदीनम्' इत्यमर । राजन्ये क्षत्रियविषये । प्रश्रयः विनयः । ...श्रास इति रभस । आकारानुभावस्य स्वरूपप्रभावस्य । गाम्भीर्येण ॥ अहो प्रासादिकमिति ॥ २० ॥ प्रासादिकं प्रसादनदानम् । 'माहात्म्ये चानुभाव.' इति कपिल । वाल्मीकिः रामायणमुद्दिश्य । वाचं सरस्वतीम् । व्यवीवृतत् वर्तयति स्मेत्यर्थः । परिणामयति स्मेति यावत् । स्थाने युक्तम्

---

१ 'रघुनन्दन. स्थित । स रामायणकथानायको ब्रह्मकोशस्य गोप्ता' इति स्वत्वात्र न-पुस्तके. २ 'भवीवृतत्' क, 'भवीवृधत्' न.

अमृताध्मातजीमूतस्निग्धसंहननस्य ते ।
परिष्वङ्गाय वात्सल्यादयमुत्कण्ठते जनः ॥ २१ ॥

( परिष्वज्य । स्वगतम् । ) तत्किमपत्यैमयं दारकः ।

अङ्गादङ्गात्स्रुॅत इव निजैस्नेहजो देहसार-
प्रादुर्भूय स्थित इव बहिश्चेतनाधातुरेकैः ।
सान्द्रानन्दक्षुमितहृदयप्रस्रवेनेव सृष्टो
गात्रं श्लेपे यदमृतरससोतसा सिञ्चतीव ॥ २२ ॥

लवः—तात ललाटंतेपो घर्मांशुः । तदत्र सालवृक्षच्छाये मुहूर्तमासनपरिग्रहं करोतु तातः ।

रामः—यदभिरुचितं वत्सस्य ।

( सर्वे परिक्रम्य यथोचितमुपविशन्ति । )

रामः—( स्वगतम् । )

अहो प्रश्रययोगेऽपि गतिस्थित्यासनादयः ।
साम्राज्यशंसिनो भावाः कुशस्य च लवस्य च ॥ २३ ॥

---

॥ २० ॥ अमृताध्मातेति ॥ २१ ॥ अमृतेन सुधया। आध्मातः पूरित. य जीमूतः मेघ. । तस्येव स्निग्धं संहननं वपुः यस्य । 'मसृणश्यामयोः स्निग्धम्' इति शाश्वतः ॥ २१ ॥ अङ्गादङ्गादिति ॥ २२ ॥ 'अङ्गादङ्गादिति' श्रुतिः । .यव. । निजस्नेहजः स्वप्रेमसंभव. । सारो बल· एको मुख्य. । चेतनायाः धातुः । 'कामोद्रेके चेतने' इति, 'धातु' स्यादस्मविकृतौ' इति शब्दमालाशब्दार्णवौ। आनन्देन क्षुमित. स्थानाकृष्टश्चासौ हृदयप्रस्रवःतेन सिक्· । प्रस्रव आर्द्रता । 'पाह्नता' (पान्हा ?) इति महाराष्ट्राः । स तादृशः सम...यावत्। आश्लेषः आलिङ्गनम् । मम मे हिमश्च्योत तुहिननिर्गलनम्। आ समन्तात् शंसतीव । एतदालिङ्गनमतिमुखशीतलमिति भावः ॥ २२ ॥ 'कठोर...रूर्ध्वं द्टो रवि. करै· । यदा ललाटं तपति स्याल्ललाटन्तपस्तदा ॥' इत्यमरशेष· । 'भूर्जस्तु मरलस्माल.' इति धन्वन्तरिः । आसनपरिग्रहं आसनं गृहाण । ध्वनिश्च ॥ अहो प्रश्रययोगेऽपीति ॥ २३ ॥ प्रश्रययोगे अनन्यकर्तृकविनययोगेऽपि । स्वस्यैवोपचारकतादशायामपीति भाव । 'योगस्सन्नहनोपायध्यानसंगतियुक्तिषु' इत्यमरः । स्थितिः अवस्थानम् । आसनं उपवेशनम् । आदिशब्देन अपरपादिकं गृह्यते । भावाः चेष्टाः लक्षणानि च ।

---

१ 'मिह' घ. २ 'परिष्वङ्गस्य' व. ३ 'तत्किमित्यय च दारकः' न. ४ 'स्नुत' ग-घ. ५ 'निजो देहजः स्नेहसारः' घ–व. ६ 'स्व' क–घ. ७ 'प्रस्रवेणावसिक्त.' न. ८ 'गाढाश्लेष. स दि मम हिमच्योतमाशंसतीव' न. ९ 'ललाटंतपस्तपति' न.

वपुरवियुतसिद्धा एव लक्ष्मीविलासाः
प्रतिकलकमनीयां कान्तिमुद्भेदयन्ति ।
अमलिनमिव चन्द्रं रश्मयः स्वे यथा वा
विकसितमरविन्दं विन्दवो माकरन्दाः ॥ २४ ॥

भूयिष्ठं च रघुकुलकौमारमनयो पश्यामि ।

कठोरपारावतकण्ठमेचकं
वपुर्वृषस्कन्धसुबन्धुरांसकम् ।
प्रसन्नसिंहस्तिमितं च वीक्षितं
ध्वनिश्च मङ्गल्यमृदङ्गमांसलः ॥ २५ ॥

( निपुणं निरूप्य । ) अये न केवलमस्मत्संवादिन्याकृतिः ।

अपि जनकसुतायास्तच्च तच्चानुरूपं
स्फुटमिह शिशुयुग्मे नैपुणोन्नेयमस्ति ।

---

'भावस्ततास्वभावाभि... . लक्षणे' इति कपिल ॥ २३ ॥ भङ्गयन्तरेणाह ॥ **वपुरवियुतसिद्धेति** ॥ २४ ॥ **वपुषा अवियुताः** अवियुक्ता सन्त । **सिद्धाः** सहजसिद्धा इति यावत् । 'काष्ठा त्रिंशत्तु ता कलाः' इति हरदत्त. । **उद्भेदयन्ति** प्रकाशयन्ति । **स्वे** आत्मीया । 'स्वो ज्ञाता-वात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रिया धने' इत्यमर । **माकरन्दाः** मक-रन्दसम्बन्धिन । **यथा** वेत्युपमानपदम् । 'यथैव वा व यद्वच यथा वा' इति केदारः ॥ २४ ॥ 'भूयिष्ठमित्यं' इत्यमर । रघुकुलस्यैव कुमारमिति विवेक ॥ **कठोरपारावतेति** ॥ २५ ॥ कठोरः तरुण इति यावत् । '**मेचकश्याम** .. ...मनोहरम्' इति त्रिकमार्ष । सुकार पादपूरक । व्यर्थ इति वहव । **वीक्षितं** अवलोकनं । **प्रसन्नं** च तत् **सिंहस्येव** स्ति-मित निश्चलमित्यर्थ । माङ्गल्य...सौ **मृदङ्गस्येव मांसलः** गम्भीर इति भाव । 'मङ्गले साधु मङ्गल्य' इति नन्दी । 'सर्वमङ्गलमाङ्गल्ये' इति श्रीसूक्त-भाष्ये स्पष्टमेतत् ॥ **अपि जनकसुताया** इति ॥ २६ ॥ तत्तत् चिह्न-मिति धे...यमजागत्स्तनोपमम् । **शिशू** इति प्रेमोपचार. बालावित्यर्थ । अपिरसंभावनायाम् । 'धन्यो मातृमुखस्तुन ' इति **मयसिद्धान्तमनुसरन्** ।

---

१ 'अविहित' क-घ-व. २ 'प्रतिक्षणकमनीय' प-घ, 'कमनीय' क. ३ 'का-न्तिमस्तैतयन्ति' क-घ-ष. ४ 'रस' क-घ-व. ५ 'ते मनोज्ञा ' क-घ-व. ६ 'विकसितमिव पद्म' क-घ-प. ७ 'भूयिष्ठ च रघुकुलकौमारमनयो ' न. ८ 'बन्धुरांसयो.' न; 'स्कन्धमबन्धुरांसयो ' घ, 'अबन्धुरांसकम्' घ. ९ अ-स्मदङ्गसंवादिनी' क-घ; 'अस्मदङ्ग°' न.

ननु पुनरिव तन्मे गोचरीभूतमक्ष्णो-
रभिनवशतपत्रश्रीमदास्यं प्रियायाः ॥ २६ ॥
शुक्लाच्छदन्तच्छविसुन्दरेयं
सैवोष्ठमुद्रा स च कर्णपाशः ।
नेत्रे पुनर्यद्यपि रक्तनीले
तथापि सौभाग्यगुणः स एव ॥ २७ ॥

( विचिन्त्य । ) तदेतत्प्राचेतसाध्युषितमरण्यं यत्र किल देवी परित्यक्ता । इयं चानयोरार्त्विज्यो ऽनुभावश्च । यदपि स्वतःप्रकाशान्यस्त्राणीति तत्र विमृशामि । अपि खलु तच्चित्रदर्शनप्रासङ्गिकमस्त्राभ्यनुज्ञानमुद्भूतं स्यात् । न ह्यसाम्प्रदायिकान्यस्त्राणि पूर्वेषामप्यनुशुश्रुम । अयं च संप्लवमानमात्मानं सुखातिशयो हृदयस्य मे विस्रम्भयते । यमाविति च भूयिष्ठमात्मसंवादः । भूयिष्ठं च मया द्विधा प्रतिपन्नो देव्या गर्भिणीभाव आसीत् । ( साश्रम् । )

पुरा रूढे स्नेहे परिचयविकासादुपचिते
रहो विश्रम्भाया अपि सहजलज्जाजडदृशः ।

---

शुष्क तु तदीय...इ—नन्विति । अभिनवं अम्लान (?) । श्रीः शोभा । 'श्रीर्वेषादौ' इति विश्व । तत् अनुभमान आस्यम् । ननु निश्चये । पुनरिव शब्दालङ्कारौ इति दयालव ॥ २६ ॥ शुक्लाच्छदन्तेति ॥ २७ ॥ शुक्ला... अच्छा निर्मला । मुद्रा...रेति यत्र । कर्ण एव पाशः । बन्धेति कल्पलताकारः । रक्तेति । 'नीलरक्तान्तलोचन' इति महापुरुषलक्षणम् । स एव प्रियासम्बन्धैवेचर्यं ॥ २७ ॥ तदेतदपीति—अस्त्राणि स्वतः-प्रकाशकेनेत्यर्थः । प्रासङ्गिकं प्रसङ्गभवम् । अस्त्राभ्यनुज्ञानमिति—सर्वथा एतानि त्वत्प्रसवमुपस्थास्यन्तीति प्रथमाङ्के चित्रपटदर्शनावसरे मयैवाभ्य-नुज्ञा इत्येवेति भाव । असाम्प्रदायिकानि देशिकाभ्यनुज्ञातेतराणीत्यर्थः । सुप्लवमानयोः ऊर्मीलङ्घेरयो । विस्रम्भः विश्वास । आत्मना सह संवाद इत्यर्थः । जीवद्रूपरूपे अपत्ये चिह्न यस्मिन् ॥ परां कोटिं स्नेहे इति ॥ २८ ॥ 'उपचारो बहिस्नेहं प्रीतिरान्तरमुच्यते' इति वस्तुनिर्णयः । सहजलज्जा चासौ था समन्ताल्लभेतरविषय इति यावत् । जडे अचल-

---

१ 'मुक्ताच्छ' क-घ-च. २ 'वपुश्च' घ, 'आर्त्विज्यो' घ. ३ 'इति च । एतानि खलु तदपि चित्र' न. ४ 'प्रवह' न. ५ 'अथ विस्मयसमुत्' न, 'इत्थं च संप्लुत' घ. ६ 'सुखदु सातिशय' न-क. ७ 'विप्रलम्भ' न. ८ 'यमा..वाद' एतत्नास्ति घ-च-पुस्तकयो. ९ 'परां कोटिं स्नेहे' न. १० 'अधिगते' न.

मयैवादौ ज्ञातः करतलपरामर्शकलया
द्विधा गर्भग्रन्थिस्तदनु दिवसैः कैरपि तया ॥ २८ ॥

( रुदित्वा ) तत्किमेतौ पृच्छामि केनचिदुपायेन ।

लवः—तात किमेतत् ।

वाप्पवर्षेण नीतं वो जगन्मङ्गलमाननम् ।
अवश्यायावसिक्तस्य पुण्डरीकस्य चारुताम् ॥ २९ ॥

कुशः—अयि वत्स

विना सीतादेव्या किमिव हि न दुःखं रघुपतेः
प्रियानाशे कृत्स्नं किल जगदरण्यं हि भवति ।
स च स्नेहस्तावानयमपि वियोगो निरवधिः
किमेवं त्वं पृच्छस्यनधिगतरामायण इव ॥ ३० ॥

रामः—( स्वगतम् । ) अये तटस्थ आलापः । कृतं प्रश्नेन । मुग्धहृदय कोऽयमाकस्मिकस्ते परिप्लवो विकार. । एवं च निर्भिन्नहृदयावेग. शिशु-

---

स्वारिण्यौ दृशौ नेत्रे यस्याः । कलया चातुर्येण । 'ग्रन्थिर्मर्मणि' इति यादव । तया सीतयेत्यर्थ ॥ २८ ॥ केनचित् अन्यावेद्येनेत्यर्थ ॥ वाप्पवर्षेणेति ॥ २९ ॥ वो तव । 'बाल्ये सुतानां...त्वङ्कारपूर्वां गिर' इति भोजचरिते । जगतां मङ्गलं येन यस्माद्वा । अवश्यायैः हिमं । पुण्डरीकस्य हिममिव त्वन्मुखस्य बाष्पधारापि चारुतेति भाव । अनेन अनितरसाधारण सौन्दर्यं व्यज्यते । अत एव 'किमिव हि मधुराणां मण्डनं नाकृतीनाम्' इत्यसघाख्यातशाकुन्तले । पुण्डरीकेति कथनात् पाण्डिमा लक्ष्यते । तथा च–'या दशा विरहे स्त्रीणां सैव पुंसामपि' इति काव्यचिन्तामणौ ॥ २९ ॥ विना सीतादेव्या इति ॥ ३० ॥ सीतैव देवी तया । 'देवी कृताभिषेकायाम्' इत्यमर । अरण्यमिव दुस्तरमित्यर्थ. । यापि ...सस्नेह ह (?) तावान्वा स्नेह इत्येवालम् । तथापि स्थितस्य गतिश्चिन्तनीयेति न्यायात् । सः प्रसिद्ध । स्नेहः तावान् अगण्य इत्यर्थ ॥ अनवगतं रामायणं येन । अत्र प्रथमो हिकार पादपूरक इति कश्चित् । तत्र 'नहि नो नापीति' अमरसिंहेनाभिधानात् । द्वितीयस्तु प्रसिद्धवाचक । कृत्स्नं किलेति भ्रान्त पाठ । बतेति साधु । अये इत्याश्चर्ये ॥ ३० ॥ तटस्थः वण्टत (?) अनेन ज्ञातोऽसीति भाव । आकस्मिकः अकस्माद्भव । परिप्लवः चपल । विनिर्भिन्नं भेदितं च तत् हृदयं तस्मिन् आवेगः

---

१ 'अवश्यायाम्बुसिक्तस्य' घ. २ 'तटस्थित.' क–घ–च. ३ 'स्नेहपरिप्लव.' क, 'संप्लवाधिकार ' न.

जनेनाप्यनुकम्पितोऽस्मि । भवतु तावदन्तरयामि । ( प्रकाशम् । ) वत्सौ रामायणं रामायणमिति श्रूयते भगवतो वाल्मीकेः सरस्वतीनिष्यन्दः प्रशस्तिरादित्यवंशस्य । तत्र कौतूहलेन यत्किंचिच्छ्रोतुमिच्छामि ।

कुशः—स कृत्स्न एव सन्दर्भोऽस्माभिरावृत्तः । स्मृतिप्रत्युपस्थितौ तावदिमौ बालचरितस्यान्त्येऽध्याये द्वौ श्लोकौ ।

रामः—उदीरयतं वत्सौ ।

कुशः—

प्रकृत्यैव प्रिया सीता रामस्यासीन्महात्मनः ।
प्रियभावः स तु तया स्वगुणैरेव वर्धितः ॥ ३१ ॥
तथैव रामः सीतायाः प्राणेभ्योऽपि प्रियोऽभवत् ।
हृदयं त्वेव जानाति प्रीतियोगं परस्परम् ॥ ३२ ॥

रामः—कष्टमतिदारुणोऽयं हृदयमर्मोद्घातः । हा देवि एवं किल तदासीत् । अहो निरन्वयविपर्यासविरसवृत्तयो विप्रलम्भपर्यवसायिनस्तापयन्ति संसारवृत्तान्ताः ।

---

सम्भ्रमः यस्य । शिशुजनेनाप्यनुकम्पितोऽस्मि । वृद्धेनेत्यत्र कैमुतिकन्यायभावः । अन्तरयामि छादयामि इत्यर्थ । निष्यन्दः गलनम् । प्रशस्तिः प्रशस्तता । स्मृति प्रत्युपस्थितौ स्मृतौ इति यावत् । बालेति बालकाण्डचरितस्य । अन्त्ये चरमे । 'अध्यायस्सर्ग' इति केदार । वत्साविति द्विवचनसंबोधनम् ॥ प्रिया तु सीतेति ॥ ३१ ॥ गुणै दयादाक्षिण्यादिभि । रूपाणां सौन्दर्याणां गणैः राशिभिश्च । एवकारश्चकारार्थः । आनेश्चर्याद्व्ययानां यथाप्रकरणं बुधैर्ज्ञेयोऽर्थ इति दण्डिसमते । प्रीतिः सन्तोष । व्यवर्धत तस्मिन्निति शेषः ॥ ३१ ॥ तथैव राम इति ॥ ३२ ॥ रामस्य सीता यथा तथैवेत्यर्थः । हृदयमित्येकवचनमहिम्ना उभयोर्हृदयमेकमेव, वपुषी परं द्वे इति भावः । परस्परं प्रीतियोगं तु हृदयमेव जानातीत्यन्वय ॥ ३२ ॥ कर्मोद्घात. पूर्वानुभूतार्थस्य । 'उद्घात आरम्भः' इत्यमरः । एवं श्लोकद्वयानुरूपमित्यर्थः । निर्गतस्य वन्नयस्य विपर्यासः वैपरीत्यं यस्मात् । तादृक् वृत्तं चरितं यस्मिन् स चासौ विप्रलम्भशृङ्गारः तस्य स्मृतिः स्मरणं । तत्पर्यवसायिनः स्मरणपर्यवसानवन्त तापकाः त्वदीया । संप्रसादस्य सम्यक् प्रसन्नतायाः । वृत्तान्ताः उदन्ता इत्यर्थ । वंशोदितचरित्रशृङ्गारस्मरणपर्यवसायिनी जाता तव प्रसादवार्तेति भावः । 'विपर्यासो वैपरीत्ये' इति, 'अन्वयो वंशे' इति, 'वृत्तं चरित्रे' इति च, 'वि-

---

१ 'निरर्थासविप्रलम्भस्मृतिपर्यवसायिनस्तापकाः संसारवृत्तान्ताः' न.

क्व तावानानन्दो निरतिशयविस्रम्भबहुलः
क्व वाऽन्योन्यप्रेम क्व च नु गहनाः कौतुकरसाः ।
सुखे वा दुःखे वा क्व नु खलु तदैक्यं हृदययो-
स्तथाप्येष प्राणः स्फुरति न तु पापो विरमति ॥ ३३ ॥

भोः कष्टम् ।

प्रियागुणसहस्राणामेकोन्मीलनपेशलः ।
य एव दुःस्मरः कालस्तमेव स्मारिता वयम् ॥ ३४ ॥

यदा किंचित्किंचित्कृतपदमहोभिः कतिपयै-
स्तदीषद्विस्तारि स्तनमुकुलमासीन्मृगदृशः ।
वयःस्नेहाकूतव्यतिकरघनो यत्र मदनः
प्रगल्भव्यापारः स्फुरति हृदि मुग्धश्च वपुषि ॥ ३५ ॥

लवः—अयं च मन्दाकिनीचित्रकूटवनविहारे सीतादेवीमुद्दिश्य रघुपते. श्लोक —

---

प्रलम्भस्तु 'शृङ्गारे' इति मेदिन्यमरकपिलसंसारावर्तो ॥ **क्व तावानानन्द** इति ॥ ३३ ॥ **विस्रम्भः** विश्वास । बचनाऽस्तीति भाव । चेत. मन । यत्र यत्र यस्मिन् मनसीत्यर्थ । तद्भेदक्लेशरहितं प्रसिद्धं वा । **हृदययोः** आवयोरिति शेष. । 'पुंसि भूम्न्यसव' प्राणा.' इत्यमरानुशासनात् प्राणा इति वक्तव्ये प्राण इति कवे प्रमाद इति केचित् । तन ॥ 'हृदि प्राणो' इति तस्यैवोक्ते । **विरमति** निरतो भवति । एतेन तद्विरहव्यथायां अपानादयो विरता, पुनराशानुबन्धात् प्राणमात्र हृदि वर्तत इति भाव ॥ ३३ ॥ **प्रियागुणेति** ॥ ३४ ॥ **उन्मीलनं** उदय । प्रकृते स्मरणमिति यावत् । **तं** कौमाराविर्भावरूपमेव कालमित्यर्थ ॥ ३४ ॥ **यदा किंचित्किंचिदिति** ॥ ३५ ॥ **स्तनमुकुलं** कर्तृ । **यदा अहोभिः** दिवसै । **कृतपदं** कृतस्थान । चतुर्थपाद सहृदीति (?) मूलम् । **तदा ईषत्** मनाक् । **विस्तारि** विस्तारशालि । **आसीत्** । यस्मिन् यत्र हृदि । **वयसः स्नेहे** प्रादुर्भावरूपे प्रेम्णि । **आकूतं** अभिप्राय । तस्य **व्यतिकरेण** सबन्धेन । **घनः** सान्द्र । **मदनः** । **प्रगल्भव्यापारः** प्रकटव्याप्ति सन् । चरति । **वपुषि** च **मुग्धः** मनोज्ञ । चरतीत्यर्थ । तथा च मदन. वयसा सह हृदि वपुषि च प्रौढ

---

१ 'क्व चेऽन्योन्य यशा.' घ–घ. २ 'क्रमोन्मीलननतपर' न; 'क्रमोन्मीलन°' घ. ३ 'दु सह.' न. ४ 'तदा' क–घ–व. ५ 'यदेतद्विस्तारि' न. ६ 'चित्रकूटवर्त्मनि मन्दाकिनीविहारे' न.

त्वदर्थमिव विन्यस्तः शिलापट्टोऽयमग्रतः ।
यस्यायमभितः पुष्पैः प्रवृष्ट इव केसरः ॥ ३६ ॥

राम.—( सलज्जास्मितस्नेहकरुणम् ) अति हि नाम मुग्ध शिशुजन.
विशेषतस्त्वरण्यचर । हा देवि स्मरसि वा तस्य प्रदेशस्य तत्समयविस्रम्भा-
तिप्रसङ्गसाक्षिण. ।

श्रमाम्बुशिशिरीभवत्प्रसृतमन्दमन्दाकिनी-
मरुत्तरलितालकाकुलललाटचन्द्रद्युति ।
अकुङ्कुमकलङ्कितोज्ज्वलकपोलमुत्प्रेक्ष्यते
निराभरणसुन्दरश्रवणपाशमुग्धं[4] मुखम् ॥ ३७ ॥

---

भातीदिति भाव ॥ ३५ ॥ त्वदर्थमिव विन्यस्त इति ॥ ३६ ॥ 'चतु-
ष्कोणा शिला शिलापट्ट ' इति त्रिकाण्डी । 'चलोतण्ड'.इति महाराष्ट्रा. ।
यस्य शिलापट्टस्य । अभित इति भाव । 'य चायमभित ' इति वा पाठ ।
'केसरः काञ्चनद्रुम ' इति धन्वन्तरि । 'घोलसरीवृक्ष' इति महाराष्ट्राः ।
पुष्पैः प्रवृष्टः प्रकर्षेण वृष्ट । कृतपुष्पवर्ष इति यावत् । द्वितीयतृतीयपाद-
योर्यमेति ध्वनि ॥ ३६ ॥ सेति-रहोवृत्ततया लज्जा । बालोक्तमिति स्मि-
तम् । पत्न्या आलम्बनतया तत्र स्नेहः । ईदृशमपि लब्धोऽपि करुणा इत्या-
न्दतो रसोऽत्र सर्वत्रैवमूह्यम् ॥ हा देवीत्यादिकथन हृदयस्थिता सीता प्रतीति
बोध्यम् । वाशब्द किमर्थे । तस्य वातस्येति ध्वनि । विस्रम्भ. विश्वास ।
तेनातिप्रसङ्गः सुरतार्थिताति भाव ॥ तदेवाह—श्रमाम्बुशिशिरीभ-
वदिति ॥ ३७ ॥ श्रमजलै शीतलीभवन् । प्रसृतः व्याप्त । मन्दः
सूक्ष्मश्च । य मन्दाकिनीमारुत । तेन तरलितैः । कम्पितै । अलकैः
चूर्णकुन्तलै । आकुलं लोल तदेव चन्द्रः तस्य द्युतिः कान्ति यस्मिन् ।
ललाटस्य चन्द्र इति काव्यलक्षणे श्रीनाथ । कुङ्कुमेन कलङ्कितौ लाञ्छितौ न
भवत इति अकुङ्कुमकलङ्कितौ । उज्ज्वलौ स्वत प्रकाशमानौ कपोलौ
यस्मिन् । कुङ्कुम कुङ्कुमादिप्रचुर रङ्गविशेष । 'पचे' इति द्राविडा । अकुङ्कुमे
त्यकुङ्कुमेति कथन वनवासादौ ल्म्यप्रयुक्तमित्यवगन्तव्यम् । एतेन कविना
निद्राविरहत्वं सूचितम् । निर्गते आभरणे च तौ सुन्दरौ श्रवणयोः
पाशौ तालपत्रे यस्मात् । तादृश च तन्मुग्धं मनोज्ञम् । अनेन स्नानावसर
इति बोध्यम् । मुखं वदनम् । उत्प्रेक्षितं ईदृगिद तादृगिति चोल्लेखा कृता
इत्यर्थ । मयेति शेष । तथा च निरुपाधिक सातासौन्दर्यमिति भाव ।

---

१ 'आवत ' न. २ 'अनेन नानाय मुग्ध ' घ. ३ 'तस्य तत्समय-
विस्रम्भातिप्रसङ्गस्य' न. ४ 'सौन्दर्य' घ-च.

( स्तम्भित इव स्थित्वा । सकरुणम् ) अहो नु खलु भोः ।

चिरं ध्यात्वा ध्यात्वा निहित इव निर्माय पुरतः
प्रवासेप्याश्वासं न खलु न करोति प्रियजनः ।
जगज्जीर्णारण्यं भवति च कलत्रव्युपरमे
कुकूलानां राशौ तदनु हृदयं पच्यत इव ॥ ३८ ॥

(नेपथ्ये ।) वसिष्ठो वाल्मीकिर्दशरथमहिष्योऽथ जनकः
सहैवारुन्धत्या शिशुकलहमाकर्ण्य सभयाः ।
जराग्रस्तैर्गात्रैरथ खलु विदूराध्वतया
चिरेणागच्छन्ति त्वरितमनसोऽपि श्रमजडाः ॥३९॥

**राम** —कथं भगवत्यरुन्धती वसिष्ठोऽम्बाश्च जनकश्चात्रैव । कथं कथं खल्वेते द्रष्टव्या । (सकरुणं विलोक्य ।) अहह तातजनकोपि दैवादत्रैवा यात इति वज्रेणेव ताडितोऽस्मि मन्दभाग्य. ।

---

अकुङ्कुमेति निराभरणेति च ध्वनी । एवमादिषु घट्टेषु परमनधीनार्थां (?) सुधीहिताश्चलमतयश्चोरवत्पलायन्तेतरामव्युत्पन्नजरद्भित्तिखण्डा , तदत्र व्युत्पन्नरसिका एव प्रमाण इति दिक् ॥ ३७ ॥ सजात स्तम्भ जडीभाव अस्य स्तम्भित स्तब्ध पुण्ठित इवेत्यर्थ ॥ **चिरं ध्यात्वा** ध्यात्वेति ॥ ३८ ॥ चिरं ध्यात्वा निर्माय । **प्रवासेऽपि** । **पुरतः** अग्रत । नगत इवेत्येकं पदम् । निषण्ण इव सभाव्यमान इति शेष । प्रियजन य कोऽपि । निश्वासं सान्त्वनम् । न खलु न करोत्येवेत्यन्वय । ध्यात्वा स्थित इव चेति क्वचित्पाठ । फलत्रस्य प्रकृते सीतायामपि । **उपरमे** तु उपरतौ अदर्शने इति भाव । **जगत्** भुवनम् । 'निस्सारे च खिलीभूते जीर्णे शुष्के भयास्पदे' इति केदार । नेदमेकमेवावभासन, इतरदप्यस्तीत्याह–**तदनु** तस्मादरण्यावभासनात् । अनु पश्चात् । **हृदय**मिति मुख्यतयोक्तम् । अत एव, 'शिवस्य हृदय विष्णोश्च हृदय' इति निर्देश । 'कुकूल शङ्कुमि कीर्णे श्वभ्रे ना तु तुषानले' इत्यमर । तेषा **राशौ** पुञ्जे । प्रच्युतं प्रकर्षेण गलितमिवेत्युत्प्रेक्षा ॥ ३८ ॥ **वसिष्ठो वाल्मीकि**रिति ॥ ३९ ॥ **महिष्यः** कौसल्यादय । ध्वनिश्च । **शिश्वो**' लवचन्द्रकेत्वो । **गात्रै**' अवयवै । **अथ** खल्विपत्यसाधु । इहेति साधु पाठ । त्वरितमस्माभिर्गम्यत इति तेषामध्यवसाय । तथाऽपि वार्धकदशया चिरेणागच्छन्तीति सक्षेपोऽर्थ ॥ ३९ ॥ पितृसमत्वात् तातश्चासौ जनक इति व्यपदेश । ताडित इति सीतापरित्यागा-

---

१ 'विपत्स्व' घ–च; 'धन्नेत्र्युपरते' म. २ '०मनसो शिशुपचटा.' म.

सम्बन्धस्पृहणीयताप्रमुदितैर्जुष्टे वसिष्ठादिभि-
र्दृष्ट्वापत्यविवाहमङ्गलमहे तत्तातयोः सङ्गतम्।
पश्यन्नीदृशमीदृशः पितृसखं वृत्ते महावैशसे
दीर्ये किं न सहस्रधाहमथवा रामेण किं दुष्करम् ॥४०॥

( नेपथ्ये । ) भो भो. कष्ट कष्टम्।

अनुभावमात्रसमवस्थितश्रियं
सहसैव वीक्ष्य रघुनाथमीदृशम्।
प्रथमप्रमूढजनकप्रबोधनाद्
विधुराः प्रमोहमुपयान्ति मातरः ॥ ४१ ॥

रामः—हा तात हा मातर हा जनक

जनकानां रघूणां च यत्कृत्स्नं गोत्रमङ्गलम्।
तत्राप्यकरुणे पापे वृथा वः करुणा मयि ॥ ४२ ॥

---

पराधादिति भाव ॥ सम्बन्धस्पृहणीयतेति ॥ ४० ॥ स्पृहणीयता इच्छा। जुष्टे सेविते। अपत्यानां सीतादीनाम्। तत्तातयोः तासा सीतादीना तातयो जनकदशरथयो। सङ्गतं समागमम् दृष्ट्वा। महावैशसे परित्यागरूपे अत्यप्रिये। वृत्ते अतीते सति। ईदृश पश्यन्नह न दीर्ये किं न दलयामि। 'वैशसमप्रियम्' इति, 'वृत्तमतीते' इति लिङ्गानुशासननामनिधाने। 'दलति दीर्यति' इति माठरोक्ते। अत्र जीर्य ( दीर्ये ? ) इति कवे प्रमाद। 'न विदीर्ये कठिना खलु स्त्रिय' इति कुमारसंभवे ईश्वरकृष्णमिश्रस्येव दयनीय ॥ नन्वह न दीर्ये कुत पुनरिद सामर्थ्यमित्यशङ्क्याह—अथवेति ॥ किं दुष्कर किमपि दुष्करं नेत्यर्थं सर्वं सुकरमिति भाव ॥ ४० ॥ अनुभावमात्रेति ॥ ४१ ॥ अनुभाव. प्रभाव। श्री शोभा लक्ष्मीर्वा। 'तस्य श्रीरनपायिनी' इति स्मरणात्। 'सीता लक्ष्मीर्भवान्विष्णु' इति रामायणे च। ईदृशं सीताविधुरम्। विधुराः दीना। प्रमोहं मूर्छाविशयम् ॥ ४१ ॥ जनकानां रघूणामिति ॥ ४२ ॥ तात मिथिलाधिप इत्यर्थं। यत् भूम्यपत्यमिति शेष। सीतेत्यर्थ। कृत्स्नं अशेषम्। गोत्रयो. वंशयो मङ्गलम्। तत्रापि सीतायाम्। अकरुणे पापे मयि।

---

१ 'मङ्गलैर्वैर्भौ' न. २ 'दृष्टे' क–घ–व ३ 'समुपस्थित' घ–व. ४ 'प्रथमप्रबुद्धजनकप्रबोधिता.' न. ५ 'तन्निवकरौ' क–घ–व.

यथासम्भावयामि । ( इत्युत्तिष्ठति । )

कुशलवौ—इत इतस्तात ।

( सकरुणाकुलं परिक्रम्य निष्क्रान्ता सर्वे । )

इति कुमारप्रत्यभिज्ञानो नाम षष्ठोऽङ्कः ।

---

## सप्तमोऽङ्कः ।

( तत प्रविशति लक्ष्मण । )

लक्ष्मण —भो भो अद्य खलु भगवता वाल्मीकिना समब्रह्मक्षत्रपौरजानपदा प्रजा सहास्माभिराहूय कृत्स्न एव सदेवासुरतिर्यङ्गुरगनायकनिकाय सचराचरो भूतग्राम स्वप्रभावेण सन्निधापित । आदिष्टश्चाहमार्येण—'वत्स लक्ष्मण भगवता वाल्मीकिना स्वकृतिमप्सरोभि प्रयुज्यमानां द्रष्टु-

---

व' युष्माकम् । करुणा वृथा ॥ ४२ ॥ इति महाराजपद + उत्तररामचरित सजीवनाख्यटिप्पणे षष्ठोऽङ्क ॥

॥ षष्ठोऽङ्कस्सपूर्ण ॥

अथ मुखसन्धिप्रभृतिउपक्षिप्तनाटकीययावद्वस्तुक्रोडीकरणरूप निर्वहणसन्धि प्रपञ्चयिष्यन् वाल्मीक्याश्रमपरित्यक्तजानकीसमनुभूतार्थमन्तर्नाटिकारमना च मत्करिष्यन् प्राचेतसवचनानुवृत्तिस्थावरजङ्गमप्रायजगद्विनुतपरिशुद्धमैथिलीकुशलवप्रमुखै श्रीरामभद्रमानन्दयिष्यन् कविरङ्कारम्भवशात् पूर्वसूचनां विनैव सभासन्निवेशोपकरणाङ्गसलक्ष्मणप्रवेश प्रक्रमते—तत इति ॥ षष्ठाङ्कसन्निधानानन्तरमित्यर्थ । भो इति मन प्रति सबोधनम् । जानपदा॰ देशवासिन । म्रियते मर्त्य न म्रियते अमर्त्य । मर्त्यश्चासावमर्त्यश्च॰ मर्त्यामर्त्यरूप इत्यर्थ । तिर्यञ्च॰ कामधेन्वादय पशव । उरगनायक वासुकि तस्य निकायः भुजगानां वर्ग तेषां सन्तान परम्परा यस्मिन् । 'वर्गो निकाये' इति, 'परम्पराभिनयोस्सन्तान ' इति नन्दिहेमचन्द्रौ । चराचरैः जङ्गमस्थावरै सहित । भूतानां पृथिव्यादीनाम् । 'क्ष्मादावृते भूत' इति, 'वृन्दे ग्राम' इति चामर' । आतोद्यस्य स्थानं आसदम्, तत्तीरस्य प्रशस्तता तत्पावनत्वादिति रव( त ? )दन्तरालस्य परित्यक्तसीताधिष्ठानत्वादिति च भाव । अत एव सीतादेवी प्राप्तप्रसववेदना आत्मानमतिदु खसंवेगात्

---

१ 'भो किं नु खलु' न. + प्रथमाङ्कटीकासमाप्तौ टीकाकृता यत्सूत्र कथित तदत्राप्यनुसन्धेयम् २ '०नियड्निकाय.' न ३ 'जङ्गम स्थावरश्च' क-घ-च.

मुपनिमन्त्रिताः स्थः । तद्रङ्गातोद्यमातोद्यस्थानमुपगम्य क्रियतां समाज-संनिवेश.' इति । कृतश्च मर्त्यामर्त्यस्य भूतग्रामस्य समुचितस्थानसंनिवेशो मया । अयं तु—

राज्याश्रमनिवासेऽपि प्राप्तकष्टमुनिव्रतः ।
वाल्मीकिगौरवादार्य इत एवाभिवर्तते ॥ १ ॥

( ततः प्रविशति रामः ।)

रामः—वत्स लक्ष्मण अपि स्थिता रङ्गप्राश्निकाः[3] ।

लक्ष्मणः—अथ किम् ।

रामः—इमौ पुनर्वत्सौ कुशलवौ कुमारचन्द्रकेतुर्ममां[4] प्रतिपत्तिं लम्भयितव्यौ ।

लक्ष्मणः—प्रभुस्नेहप्रत्ययात्तथैव कृतम् । इदं चास्तीर्णं राजासनम् । तदुपविशत्वार्यः ।

रामः—( उपविशति । )

लक्ष्मणः—प्रस्तूयतां भोः ।

---

गङ्गाप्रवाहे निक्षिप्तवती इति तृतीयाङ्कविष्कम्भे तमसयोक्तम् । सलिलादुपैति इत्यत्र वरुणपवना स्फुटीभविष्यति चेति दिक् ॥ 'ततं वीणादिकम्' इत्यादि, 'वादित्रातोद्यनामकं' इत्यन्तममरः । 'वाजन्त्री' इति महाराष्ट्राः । समाजः सभा । मर्त्येति पूर्वमनुवादः । सम्प्रति स्वतः कथनमिति न पुनरुक्तिः ॥ राज्याश्रमेति ॥ १ ॥ राज्यमेव आश्रमः सौख्याभावादिति भावः । कष्टं च तन्मुनिव्रतम् । वाल्मीकिना वाल्मीकौ च गौरवात् ॥ १ ॥ 'रङ्गो नाट्यस्थलं' इति, 'सामाजिकः प्राश्निकः' इति च त्रिकाण्डशेषः । प्रतिपत्तिः मर्यादा । वात्सल्यमिति यावत् । लम्भयितव्यौ प्रापणीयौ । प्रभोः स्नेहेन । प्रत्ययात् विश्वासात् । कुशलवयोः भवति स्नेहेन अस्मदादीनामपि तयोर्विश्वासः अस्तीति भावः । तथैव चन्द्रकेतुवत् । कृतं वात्सल्यमिति शेषः । राजासनमास्तीर्णमिति कवेरिव कस्य न व्याकर्तुश्चातुर्यम् । 'नृपासनं यत्तद्भद्रासनं सिंहासनं च तत्' इत्यमरसिंहेनाभिहिततया सिंहासनस्यास्तरणत्वासंभवात् ॥ न च वाच्यमास्तरणोचितमन्यदासनं भवत्विति । तर्हि समानायकस्य महाराजत्वे जगत्पते इति गङ्गया वक्ष्यमाणे वचसि चासरसापत्तेः । तस्माद्भूततरमूल्यगुरुत्वात्स्थानमेव

---

१ 'तद्रङ्गातोद्यस्थानम्' घ. २ '°स्थानेषु समुपवेशः कृतो मया' घ.
३ 'प्रेक्षकाः' क-घ-च. ४ '०सदृशीं स्नानप्रतिपत्तिम्' क-घ-च.

सूत्रधारः—( प्रविश्य । ) भो भो भगवान्भूतार्थवादी प्राचेतसः सस्थावरजङ्गमं जगदाज्ञापयति—यदिदमस्माभिरार्षेण चक्षुषा समुद्वीक्ष्य पावनं वचनामृतं करुणाद्भुतरसं च किंचिदुपनिबद्धं तत्र कार्यगौरवादवधातव्यमिति ।

रामः—एतदुक्तं भवति । साक्षात्कृतधर्माण ऋषयः । तेषामृतम्भराणि भगवतां परोरजांसि प्रज्ञानानि न क्वचिद्व्याहन्यन्त इत्यनभिशङ्कनीयानीति ।

( नेपथ्ये । ) हा अज्जउत्त हा कुमार लक्खण एआइणिं असरणं रण्णे आसण्णप्पसववेअणं हदासा सावदा मं अहिलसन्दि । साहं दाणिं मन्दभाइणी भाईरहीए अत्ताणं णिक्खिविस्सम् । हा आर्यपुत्र हा कुमार लक्ष्मण एकाकिनीमशरणामरण्ये आसन्नप्रसववेदनां हताशाः श्वापदा मामभिलषन्ति । साहमिदानीं मन्दभागिनी भागीरथ्यामात्मानं निक्षेप्स्यामि ।

---

शरणमिति दिक् ॥ **भूतार्थवादी** सत्यवस्तुवादी । 'भूतं त्रिषूचिते सत्ये' इति, 'अर्थोऽर्थेनाविषययोधनकारणवस्तुषु' इति चापि केदारौ । 'कथयामि ते भूतार्थम्' इति अभिज्ञानशाकुन्तले । प्रति उद्दिश्य **आर्षेण** आर्षिकेन । **वचनान्येव अमृतानि** यस्मिन् । करुणाद्भुतधारौ **रसौ** यस्मिन् । **किञ्चित्** चरितमिति शेषः । **कार्ये** प्रयोजने । आर्षप्रसादे इति भावः । **साक्षात्कृता धर्मा** यैस्ते । साक्षात्कृतधर्माणः । 'न्यायाचारस्वभावेषु धर्मे पुण्ये जनस्थितौ' इति रत्नमाला ॥ 'वचसि स्थेयमस्माभिः सतां विदितधर्मणाम्' इति **कोल्लटः** । 'ऋषयः सत्यवचसः' इत्यमरः । अमृतं बिभ्रति **अमृतम्भराणि** इति कवेः प्रमादः । तथापि 'वीणाऽस्तु सा वाङ्मयी प्रिये ते श्रणोपि वाक्यान्यमृतम्भराणि ।' इति **श्रीनाथः** । **परोरजांसीति**—यानि रजसः पराणि तानीत्यर्थः । शुद्धं अरजस्कम् । परोरजः इति केदारः । 'प्रमादरहितं ज्ञानं प्रज्ञानम्' इत्यगस्त्यः । **अनभिशङ्कनीयानि** नाशङ्कोचितानि **इत्येतदुक्तं भवतीति** पूर्वेणान्वयः ॥ अथ अन्तर्नाटकपात्रभूतायाः लक्ष्मणपरित्यक्तायाः सीतायाः प्रवेशसूचनमारभते—**नेपथ्ये इति** । हा आर्यपुत्र हा कुमार लक्ष्मण एकाकिनीमशरणामासन्नप्रसवामरण्ये हताशा श्वापदा अभिलषन्ति । हा इदानीं मन्दभागिनी आत्मानं भागीरथ्यां निक्षिपामि । 'अरण्यक' इति कवेः प्रमादः । 'लोपोऽरण्ये' इत्य

---

१ एतन्नास्ति क-घ-च-पुस्तकेषु २ '°धर्माणो महर्षयः' क-घ-न ३ 'अमृतसाराणि' क-घ-च ४ 'इति नाभिशङ्कनीयानि' क, 'न ^ शङ्की यानि' न. ५ 'हदासा' ( हताशा ) टी

लक्ष्मणः—( आत्मगतम्। ) कष्टं वतान्यदेव किमपि।

सूत्रधारः—विश्वंभरात्मजा देवी राज्ञा त्यक्ता महावने।
प्राप्तप्रसवमात्मानं गङ्गादेव्यां विमुञ्चति ॥ २ ॥

( इति निष्क्रान्तः। )

प्रस्तावना।

---

रामः—( सावेगम्। ) देवि देवि लक्ष्मणमवेक्षस्व।

लक्ष्मणः—आर्य नाटकमिदम्।

रामः—हा देवि दण्डकारण्यवासप्रियसखि एष ते रामाद्दैवदुर्विपाकः।

लक्ष्मणः—आर्य दृश्यतां तावत्प्रबन्धार्थः।

रामः—एष सज्जोऽस्मि वज्रमयः।

( ततः प्रविशत्युत्सङ्गितैकैकदारकाभ्यां पृथिवीगङ्गाभ्यामवलम्बिता सीता। )

रामः—वत्स लक्ष्मण असंविज्ञातपदनिबन्धनमन्धतमसमिव प्रविशामि धारय माम्।

देव्यौ—

समाश्वसिहि कल्याणि दिष्ट्या वैदेहि वर्धसे।
अन्तर्जले प्रसूतासि रघुवंशधरौ सुतौ ॥ ३ ॥

सीता—( समाश्वस्य। ) दिट्ठिआ दारए प्पसूदम्हि। हा अज्जउत्त। दिष्ट्या दारकौ प्रसूतास्मि। हा आर्यपुत्र।

---

तुपसर्जनादकारलोपेन रामे इति सम्बोधनस्य सामीप्याद्। अत एव 'राम' इति महाराष्ट्राः। 'आपदा दिग्जन्तव' इति सारावर्तः। कष्टमिति— यत्किंचिदुक्तं अन्यदारब्धमिति भावः। विश्वम्भरात्मजेति ॥ २ ॥ विश्वम्भरायाः भूमेः ॥ २ ॥ प्रस्तावना ॥ सावेगं सभयसंभ्रमम्। लक्ष्मणमवेक्षस्वेति–अहमपराधीति भावः। नाटकमिदमिति–पश्यता भ्रमनिवारणायेति बोध्यम्। उत्सङ्गितः उत्सङ्गे कृतः एकैकदारको याभ्यामित्यर्थः। अत्र कुशलवौ गङ्गापृथिव्यौ सीता एतत्तानपचरमन्तनो- द्दीयम्। तत्र श्रमं विना तत्तदभिनयवत्तद्दारुभाषणादिकं निपुणमतिभिरव- गन्तव्यम् ॥ पदनिबन्धनं स्थानमस्त्यस्य ॥ समाश्वसिहि कल्याणीति

---

१ 'दुःख' क-घ; 'लक्ष्मण अवेक्षस्व' घ. २ 'रामाद्विपाकः' ग. ३ 'असंविज्ञातपदनिबन्धने तमसीवाहमद्य प्रविशामि' ग. ४ 'अन्तर्जलम्' घ-ङ.

लक्ष्मणः—( पादयोर्निपत्य । ) आर्य आर्य दिष्ट्या वर्धामहे । कल्याणप्ररोहो रघुवंशः । ( विलोक्य । ) हा हा कथं क्षुभितबाष्पोत्पीडनिर्भरः प्रमुग्ध एवार्यः । ( वीजयति । )

पृथिवी—वत्से समाश्वसिहि ।

सीता—( समाश्वस्य । ) भअवदीओ का तुम्हे । मं मुञ्चह । भगवत्यौ के युवाम् । मा मुञ्चतम् ।

पृथिवी—इयं ते श्वशुरकुलदेवता भागीरथी ।

सीता—भअवदि णमो दे । भगवति नमस्ते ।

भागीरथी—चारित्रोचितां कल्याणसम्पदमधिगच्छ ।

लक्ष्मणः—अनुगृहीताः स्मः ।

भागीरथी—इयं तु जननी ते विश्वम्भरा ।

सीता—हा अम्ब ईदिसी अहं तुए दिट्ठा । हा अम्ब ईदृश्यहं त्वया दृष्टा ।

पृथिवी—एहि वत्से एहि पुत्रि ।

( उभौ आलिङ्ग्य मूर्च्छतः । )

लक्ष्मणः—( सहर्षम् ) दिष्ट्या गङ्गापृथिवीभ्यामभ्युपपन्नार्या ।

रामः—( अवलोक्य । ) दिष्ट्या मत्येतत्करुणोत्तरं वर्तते ।

भागीरथी—अत्रभगवती विश्वम्भरापि नाम व्यथत इति जितमपत्य-

---

॥ ३ ॥ दिष्ट्या इदानीं प्रसूतास्मि( सि ? ) कल्याणौ शुभौ प्ररोहौ अङ्कुरौ सुतरूपौ यस्मिन् । क्षुभितानां जर्जराणां बाष्पाणां उत्पीडः प्रादुर्भाव निर्भरः निरतिशय यस्मिन् । प्रकर्षेण मुग्धः मूढ । भगवत्यौ के युवा मा मुञ्चतम् । भगवत्यौ इति सम्बोधनम् । भागीरथीत्वापादक हेतुगर्भं नाम । भगवति नमस्ते ॥ हा अम्ब ईदृशी त्वयाऽहं दृष्टा ॥ मूर्च्छतः मुह्यत । प्रेमावेशेनेति भाव ॥ आर्या सीता । अभ्युपपन्ना अनुगृहीता ॥ दिष्ट्या दैवात् । एतत् अभ्युपपादनं अनुग्रह इति यावत् । करुणो रस उत्तर. अधिक यस्मिन् । इद एतदित्यस्य विधेयविशेषणं बोध्यम् ॥ अत्र सीताविषये । तथा च । एषा विश्वम्भरा । अस्या गीतेव

---

१ 'भअवदि का तुम एअं अ' ( का त्वम्, इय च ) क–घ–ध. २ 'चारित्रोपचिताम्' घ–ध. ३ 'करुणान्तर वर्तेतद्वर्तेते' क–घ–ध; 'करुणान्तरम्' ग.

स्नेहेन । यद्वा सर्वसाधारणो ह्येष मानसो मोहग्रन्थिश्चेतनावतामुपप्लवः संसारतन्तुः । देवि भूतधात्रि परसे वैदेहि समाश्वसिहि समाश्वसिहि ।

पृथिवी—देवि सीतां प्रसूय कथमाश्वसिमि ।

सोढश्चिरं राक्षसमध्यवास-
स्त्यागो द्वितीयो हि सुदुःसहोऽस्याः ।

भागी०—को नाम पाकाभिमुखस्य जन्तो-
र्द्वाराणि दैवस्य पिधातुमीष्टे ॥ ४ ॥

पृथिवी—भगवति भागीरथि युक्तमेतत्सर्वं न वो रामभद्रस्य ।

न प्रमाणीकृतः पाणिर्बाल्ये बालेन पीडितः ।
नाहं न जनको नाग्निर्नानुवृत्तिर्न सन्ततिः ॥ ५ ॥

सीता—हा अज्जउत्तं सुमराविदम्हि । हा आर्यपुत्रं स्मारितास्मि ।

---

वत्सपलानि वा तदपि व्यथते । अत पत्यु ( अपत्य ? )स्नेहेन जितमिति भाव ॥ मानसः मनस्सम्बन्धी । मोहग्रन्थिः ममतापाश. । 'ममता-मूर्छयोर्मोह.' इति, 'ग्रन्थिर्ना पर्वपाशयो' इति वामनयादवौ । चेतनावतां प्राणिनाम् । 'उपप्लव उपद्रवे' इति ध्वनिमञ्जरी । गूढेसान्तर इति च द्विपदी प्रक्षिप्ता । भूतधात्रि इति भूवाचक सबोधनम् ॥ सोढश्चिरमिति ॥ ४ ॥ सोढः क्षान्त । लङ्कायामिति भाव । हि प्रसिद्धौ । अहिस्सर्प इव सुदुस्सह इति एकपद च । पाकः सुखदु खपरिणामं तानुद्दिश्य अभिमुखस्य । 'पोते च परिणामे च पाक ' इति नानार्थमञ्जरी । जन्तोर्विषये । 'तस्य वा तस्य विषये' इति समयपद्धति । दैवस्य सुखदु खप्रापकनिधे. । द्वाराणि प्रवेशमार्गान् । पिधातुं आच्छादयितुम् । ईष्टे समर्थो भवति । तथा च—'अवश्यमनुभोक्तव्य कृतं कर्म शुभाशुभम् ॥' इति भावः । 'प्रवेशमार्गे च द्वारि छिद्रे च' इति धनञ्जयः ॥ ४ ॥ न वो रामभद्रस्येति भिन्नं वाक्यम् । वः युष्माकम् । रामभद्रस्य नेति युक्तमित्यनुषङ्गः । 'सीतालक्ष्मीर्भवान्विष्णु ' इति स्मारितत्वादिति भाव. । तदेवाह—न प्रमाणीकृत इति ॥ ५ ॥ अनुवृत्तिः अनुवर्तनम् । सन्ततिः रघूणां वंश । प्रमाणीकृत इति पद सर्वत्र यथोचितमूह्यम्

---

१ 'मनसो मूढग्रन्थिरान्तर.' न, 'मनसो मोहग्रन्थिरन्तश्चर.' क–च, 'मूढग्रन्थिरन्तश्चर.' घ. २ 'अनुपप्लव.' क–घ–च. ३ 'स्मरसिरन्' ग. ४ 'द्वितीयस्तु' न; 'द्वितीयश्च' क–घ–च. ५ 'जन्तुः' न–च. ६ 'सदृशमुक्तम् । युष्मेतस्य रामभद्रस्य' क–घ–च; 'मर्म वो रामभद्रस्य' न. ७ 'न तु वृत्ति ' न.

पृथिवी—आः कस्तवार्यपुत्रः ।

सीता—( सलज्जास्रम् । ) जह वा अम्बा भणादि । यथा वाऽम्बा भणति ।

रामः—अम्ब पृथिवि, ईदृशोऽस्मि ।

भागी०—भगवति वसुन्धरे शरीरमसि संसारस्य । तत्किमसंविदानेव जामात्रे कुप्यसि ।

> घोरं लोके विततमयशो या च वह्नौ विशुद्धि-
> र्लङ्काद्वीपे कथमिव जनस्तामिह श्रद्दधातु ।
> इक्ष्वाकूणां कुलधनमिदं यत्समाराधनीयः
> कृत्स्नो लोकस्तदिति विषमे किं स वत्सः करोतु ॥ ६ ॥

लक्ष्मणः—अव्याहतान्तःप्रकाशा हि देवताः सत्त्वेषु ।

भागी०—तथाप्येष तेऽञ्जलिः ।

रामः—अम्ब अनुवृत्तस्त्वया भगीरथकुले प्रसादः ।

पृथिवी—देवि नित्यं प्रसन्नास्मि वः । किं त्वापातदुःसहः स्नेहसंवेगेनैवं ब्रवीमि । न पुनर्न जानामि सीतास्नेहं रामभद्रस्य ।

---

॥ ५ ॥ हा आर्यपुत्र स्मर्यसे । आः कोपे । यथाऽम्बा भणति । 'अम्बा माता गुरुवधूः श्वश्रूर्ज्येष्ठप्रजापती' इति रत्नमाला । शरीरमसि शरीरमिव सर्वैः प्रार्थनीयासीत्यर्थः । सर्वाधारत्वादिति भावः ॥ घोरं लोके विततमिति ॥ ६ ॥ विततं विस्तृतम् । श्रद्दधातु दूरवृत्तत्वादिति भावः । समाराधनीय इति यत् इदं इक्ष्वाकूणां कुलधनमित्यर्थः । तद्वदावश्यकमिति ण्वत् । एतेन- 'लब्धा ( ल्ब्धा ? ) कुलधनं राजा लङ्का प्रायाद्विभीषण ।' इत्यत्र यत् कैरपि यथेच्छं व्याहृतम्, तदपास्तम् । तत् तस्मात् । इति पूर्वोक्तप्रकारेण । विषमे सङ्कटे ॥ ६ ॥ सत्त्वेषु निश्चयेषु । अथ गङ्गा भूमि प्रसाद-तथापीति । ते तुभ्यम् । अञ्जलिः मया क्रियत इति शेष । अनुवृत्तः अनुसृत कृत इत्यर्थः । अस्माविलस्य उदूमिति सम्प्रदायार्थः । अत एव अनावागतोऽस्मीति विक्रमचरिते डिण्डिमः । आपाते आकर्णनक्षण एव दुस्सहं कौलीनं यस्मात्तादृशी चासौ सुता तस्याः स्नेहस्य आवेगः आगमन्ताद्वेग आवेगस्तेनेत्यर्थः । 'दर्शनक्षण आपातमथैवाकर्णनक्षण' ।

---

१ 'तदिह' न-क, 'तमपि विषमे' घ, 'तदतिगहनम्' य. २ 'भूतेषु विशेषेण गङ्गा' घ-व. ३ एतल्लक्ष्मणवाक्यं घ-य-पुस्तकयोः. ४ 'दु सह स्नेहसंवेगोऽत्र-त्तस्य न पुनर्न' घ; 'किं त्वमावापातदुःसह स्नेहसंवेग ' न.

दह्यमानेन मनसा दैवाद्वत्सां विहाय सः ।
लोकोत्तरेण सत्त्वेन प्रजापुण्यैश्च जीवति ॥ ७ ॥

रामः—सकरुणा हि गुरवो गर्भरूपेषु ।

सीता—( रुदती कृताञ्जलिः । ) णेदु मं अत्तणो अङ्गेसु विलअं अम्बा । नयतु मामात्मनोऽङ्गेषु विलयमम्बा ।

रामः—किमन्यद्ब्रवीतु ।

भागी०—शान्तम् । अविलीना संवत्सरसहस्राणि भूयाः ।

पृथिवी—वत्से अवेक्षणीयौ ते पुत्रकौ ।

सीता—अणाधम्हि । किं एदेहिं । अनाथास्मि । किमेताभ्याम् ।

रामः—हृदय वज्रमसि ।

भागी०—कथं त्वं सनाथाप्यनाथा ।

सीता—कीरिसं मम अभग्गाए सणाहत्तणं । कीदृशं मे अभाग्यायाः सनाथत्वम् ।

देव्यौ—जगन्मङ्गलमात्मानं कथं त्वमवमन्यसे ।
आवयोरपि यत्सङ्गात्पवित्रत्वं प्रकृष्यते ॥ ८ ॥

लक्ष्मणः—आर्य श्रूयताम् ।

रामः—शृणोतु लोकः ।

( नेपथ्ये कलकलः । )

रामः—अद्भुततरं किमपि ।

सीता—किंति आबद्धकलकलं अन्तरिक्खं पज्जलदि । किमिति बद्धकलकलमन्तरिक्षं प्रज्वलति ।

---

इति, 'कीर्तने लोके च' इति केदारहैमौ । अत एव 'अदभ्रमसमनधुरम्' इति सार्वभौमः । सीताया केदम् । 'धैर्ये सत्त्व' इति जयः ॥ दह्यमानेन मनसेति ॥ ७ ॥ प्रजानां पुण्यैः ॥ ७ ॥ गर्भाणामिव रूपं आकृतिर्येषां तेष्विति शेषः ॥ नयतु मामात्मनोऽङ्गेषु विलयमम्बा । 'अन्तर्धाने च विलय' इत्यमरः । अविलीना अनष्टा । किमेताभ्यामनाथाभ्याम् । वज्रमसीति— एवमश्रीलमदात्यदिति भावः । कीदृशं मे अभाग्यायाः सनाथत्वम् । नाथन्नातपतिस्वामिदेवधारेश्वरि' इति नन्दी ॥ जगन्मङ्गलमिति ॥ ८ ॥ यत् यस्मात् आवयोः । सङ्गात् सङ्गते । प्रकृष्यते अधि-

---

१ 'धैर्येण' ख. २ 'वज्रमयम्' क-घ-ख. ३ 'कथं वत्सौ सनाथावप्यनाथौ' न. ४ एतनास्ति क-घ-ख-पुस्तकेषु.

देव्यौ—ज्ञातम् ।

कृशाश्वः कौशिको राम इति येषां गुरुक्रमः ।
प्रादुर्भवन्ति तान्येव शस्त्राणि सह जृम्भकैः ॥ ९ ॥

( नेपथ्ये । ) देवि सीते नमस्तेऽस्तु गतिर्नः पुत्रकौ हि ते ।
आलेख्यदर्शनादेव ययोर्दाता रघूद्वहः ॥ १० ॥

सीता—दिट्ठिआ अत्थदेवदाओ एदाओ । हा अज्जउत्त अज्जावि दे पसादा पडिप्फुरन्दि । दिष्टया अस्त्रदेवता एता । हा आर्यपुत्र अद्यापि ते प्रसादा प्रतिस्फुरन्ति ।

लक्ष्मणः—उक्तमासीदार्येण सर्वथेदानीं त्वत्प्रसूतिमुपस्थास्यन्तीति ।

देव्यौ—नमो वः परमास्त्रेभ्यो धन्याः स्मो वः परिग्रहात् ।
काले ध्यातैरुपस्थेयं वत्सयोर्भद्रमस्तु वः ॥ ११ ॥

राम —क्षुभिताः कामपि दशां कुर्वन्ति मम सांप्रतम् ।
विस्मयानन्दसन्दर्भजर्जराः करुणोर्मयः ॥ १२ ॥

देव्यौ—मोदस्व वत्से मोदस्व । रामभद्रतुल्यौ ते पुत्रकाविदानीं संवृत्तौ ॥

सीता—भअवदीओ को एदाणं खत्तिओइदविहिं काराइस्सदि । भगवत्यौ क एतयोः क्षत्रियोचितविधिं कारयिष्यति ।

---

दीप्तिवे ॥ ८ ॥ श्रूयतामिति—चतुर्थचरणमिति भाव । लोक इति नस्यैवापवाद नलादिति भाव ॥ दिमित्यावद्धफलकलं ज्वलतीवान्तरिक्षम् ॥ कृशाश्व' कौशिकः इति ॥ ९ ॥ क्रमः परम्परा । 'शस्त्रमस्त्र'मित्यमरं । जृम्भकैः अस्त्रविशेषै ॥ ९ ॥ देवि सीते इति ॥ १० ॥ ते तव चित्रं आलेख्यम् । चित्रम् । ययोः पुत्रकयो । 'कस्य ददाति' ( इति [2] ) वाण-कवि' । याभ्यामिति पाठ ॥ १० ॥ दिष्ट्या अस्त्रदेवता । हा आर्यपुत्र अद्यापि ते प्रसादा प्रस्फुरन्ति ॥ नमो व इति ॥ ११ ॥ वः युष्माकम् । परिग्रहात् आदानात् । अस्त्रागमेन पारवश्यमाह—क्षुभिता कामपीति ॥ १२ ॥ क्षुभिताः क्षोभं प्राप्ता । सन्दर्भेण सम्बन्धविशेषेण सघट्टनेति यावत् । जर्जराः शकलीभूता । करुणोर्मयः दयातरङ्गा ॥ १२ ॥ भगवति क इदानीमेताभ्यां क्षत्रियोचित विधिं विद्या च कारयिष्यति । विधिं

---

१ 'दर्शने देवो यदाह रघुनन्दन.' क–घ. २ एतद्रामवाक्य घ–पुस्तके.
३ 'खत्तिओचिद कम्म करिस्सदि' ( क्षत्रियोचित कर्म करिष्यति ) क–घ–ब.

रामः—एषा वसिष्ठगुप्तानां रघूणां वंशनन्दिनी ।
कष्टं सीतापि सुतयोः संस्कर्तारं न विन्दति ॥ १३ ॥

भार्गी०—पुत्रि किं तवानया चिन्तया । एतौ हि वत्सौ खन्यत्यागानप-रेण भगवतो वाल्मीकेरर्पयिष्यामि । स एतयोः क्षत्रकृत्यं करिष्यति ।

यथा वसिष्ठाङ्गिरसावृषिः प्राचेतसस्तथा ।
जनकानां रघूणां च वंशयोरुभयोर्गुरुः ॥ १४ ॥

रामः—सुविचिन्तितं भगवत्या ।

लक्ष्मणः—आर्य सत्यं विज्ञापयामि तैस्तैरुपायैरिमौ वत्सौ कुशलवा-वुत्प्रेक्षे ।

एतौ हि जन्मसिद्धास्त्रौ प्राप्तप्राचेतसावुभौ ।
आर्यतुल्याकृती वीरौ वयसा द्वादशाब्दिकौ ॥ १५ ॥

रामः—वत्सौविलेवाहं परिप्लवमानहृदयः प्रमुग्धोऽस्मि ।

पृथिवी—एहि वत्से पवित्रीकुरु रसातलम् ।

---

निधानम् ॥ एषा वसिष्ठेति ॥ १३ ॥ 'मन्त्रव्याख्याकृदाचार्य' इत्यमर । आत्मसुतयो कुशलवयो । संस्कार जातकर्मादिकम् । ध्वनिश्च ॥ १३ ॥ वयसा उपलक्षिताविति शेष । करे पाणौ । 'ऋष्यभेदे चाङ्गिरसो मुनिभेदे बृहस्पतौ' इति वैजयन्ती ॥ १४ ॥ शोभनं च तत् चिन्तितम् । 'उपास-क्षिहसामादिचेष्टितेङ्गितयुक्तिषु' इति समास । कुशलवौ उद्दिश्येत्यर्थ ॥ अथ सप्तमाङ्कारम्भे लक्ष्मणानन्तर प्रविष्टेन रामेण, 'इमौ पुनर्वामौ कुशलवौ कुमारचन्द्रकेतुमसा प्रतिपत्ति सम्भावितव्यौ' इति आज्ञापितो लक्ष्मणोऽन्ये …(?)यन्यतरकालदृष्टकुशलवयो रूपशौर्यादिगुण । साम्प्रतमन्तर्नाटके सानन्य-वत्यादिकौतुकमालोकमानः संविधानगाहिन्य भ्रमेण रामभेदमनुवदे—एतौ हीति ॥ १५ ॥ अत्र निशेषणचक्रं सुधियामपि भ्रमापादीति मन्तव्यम् ॥ १५ ॥ अथ गाहिन्यकस्य (?) कथनेन तदिदं नाटकं परिशील्यते—रञ्जनाय सविधानरहस्यपरिस्फोट कृतो अभिवेदकथने सभ्याभिज्ञाभङ्ग-प्रकटीकृतो भवेत् । अतः रामधनत्कुर्वेनाह—अतीति । परिप्लवमानहृदयः तरलान्तरङ्ग. । संप्रमुग्ध इति—संप्रौ व्यर्थोपसर्गौ । अतिगानं मूढ इत्यर्थ ।

---

१ 'शिष्यापाना' न. २ 'वर्धिनी' घ–व. ३ अस्य वाक्यस्य स्थाने 'वसिष्ठ—एव आचार्यो रघुवंशस्य सम्प्रति । स एव चानयोर्महसुत्रकृत्य करिष्यति ॥' इत्येषो न–पुस्तके. ५ 'वत्स श्लेषाहं' क–घ–व.

रामः—हा प्रिये लोकान्तरं गतासि ।

सीता—णेदु मं अत्तणो अङ्गेसु विलअं अम्बा । ण सहिस्सं ईरिसं जीअलोअपरिभवं अणुभविदुं । नयतु मामात्मनोऽङ्गेषु विलयमम्बा । न सहिष्ये ईदृशं जीवलोकपरिभवमनुभवितुम् ।

रामः—किमुत्तरं स्यात् ।

पृथिवी—मन्नियोगतः स्तन्यत्यागं यावत्पुत्रयोरवेक्षस्व । परेण तु यथा रोचिष्यते तथा करिष्यामि ।

भागी०—एवं तावत् ।

( इति निष्क्रान्ते देव्यौ सीता च । )

रामः—कथं विलय एव वैदेह्याः सम्पन्नः । हा देवि दण्डकारण्यवास-प्रियसखि हा चारित्रदेवते लोकान्तरं पर्यवस्थितासि । ( मूर्छति )

लक्ष्मण—भगवन्वाल्मीके परित्रायस्व परित्रायस्व । एष ते काव्यार्थः ।

( नेपथ्ये । ) अपनीयतामातोद्यम् । भो भो सजङ्गमस्थावराः प्राण-भृतो मर्त्यामर्त्याः पश्यतेदानीं महर्षिणा भगवता वाल्मीकिनाऽभ्यनुज्ञातं पवित्रमाश्चर्यम् ।

---

तथा च न रसातलप्रवेशादिरमतीत चरितं गर्भनाटकव्याजेन दर्शितम् ॥ एतौ द्वौति पद्यस्थनिर्देशपद्यक प्रपञ्चितम् । वाल्मीकिसमाश्रयचन्द्रवेतुसमरार-भटीरामभद्रसलापगुणादिविशिष्टं कुशलवयोः कौमारप्रकरणं तदिदं नाटक-गर्भनाटकात्मना द्विकोटिकं कविचमत्कृतं सविधानरहस्यनारिकेलमतुलमनिशि-तले स्फोटितवानहम् । शिष्यशिशुरनसूयाप्रगुणगुणमणिप्रदयालुभिरनुभाव्य इति दिक् ॥ लोकान्तरं ध्वनि ॥ नयत्वात्मनोऽङ्गेषु विलयमम्बा न सहिष्ये रात्रिंदिव जीवलोकस्परिभवमनुभवितुम् । जीवयुक्तलोकेषु भुवनेषु । 'जीव-स्वग्ने' इति कपिल । परिभवं तिरस्कारम् । नियोगतः शासनात् । परेण वयसेति शेष । प्रतिपद्य ज्ञातमेव अन्तर्नाटकमिति शेषः । 'तावत् मात्स्नेऽवधौ मानेऽवधारणे' इत्यमरः । चरित्रेण देवतेत्यर्थः । न मानुषीति भाव । एष ते काव्यार्थः निष्ठित इति भाव । एतावत्पर्यन्तं गर्भनाटकमिति सूक्ष्मदृग्भिर्बोध्यम् ॥ प्रकृतमनुसरति-नेपथ्ये इति ॥ आ-तोद्यं चतुर्विधवाद्यम् । प्राणभृत इति-अनन्यगत्या रासनाट्यारम्भप्रथमप्र-

---

१ 'परिवत्त' ( परीवर्तं ) क-घ-य. २ 'कथं प्रतिपन्न एव तावत् । हा चारि-त्रदेवते लोकान्तरे पर्यवसितासि' न. ३ 'एष किं ते काव्यार्थः' य.

